अथ भृगुवल्ल्यध्याये दशमोऽनुवाकः।

**न कंचन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳराद्धम् अन्ततोऽस्मा अन्नꣳराध्यते (१)। य एवं वेद। क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति**

निवास के लिए घर पर आये हुए किसी का भी (अतिथि का) परित्याग न करें, (पृथिवी और आकाश की उपासना करने वालों के लिये) यह व्रत है। इसलिये गृहागत अतिथिसत्कार के लिये किसी न किसी प्रकार खूब अन्न प्राप्त करें (क्योंकि अन्नउपासक गृहागत) उस अतिथि से "मैंने अन्न तैयार किया है" ऐसा कह कर परित्याग नहीं करते। जो गृहस्थ सत्कारपूर्वक सिद्ध किया हुआ अन्न अतिथि को देता है उसे मुख्यवृत्ति से ही अन्न प्राप्त होता है। जो मध्यमवृत्ति से सिद्ध किया हुआ अन्न है उसे मध्यमवृत्ति से ही अन्न प्राप्त होता है और जो निकृष्टवृत्ति से (तिरस्कार पूर्वक) सिद्ध किया हुआ अन्न देता है उसे निकृष्टवृत्ति से अन्न प्राप्त होता है।।१।। जो इस प्रकार जानता है (उसे पूर्वोक्त फल की प्राप्ति होती है। अब प्रकारान्तर से ब्रह्मोपासना बतलाते हैं।) ब्रह्म वाणी में क्षेमरूप से, योगक्षेमरूप से प्राण और अपान में, कर्मरूप से हाथों में, गतिरूप से चरणों में और विसर्गरूप से गुदा में (उपासनीय है), यह मनुष्य सम्बन्धी उपासना बतलायी गयी है। अब

---

चक्षते न नास्तीति प्रत्याख्यानं कुर्वन्ति तस्माच्च हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण संबन्धः। अपि चान्नदानस्य माहात्म्यमुच्यते। यथा यत्कालं प्रयच्छत्यन्नं तथा तत्कालमेव प्रत्युपनमते।

कथमिति तदेतदाह —

एतद्वा अन्नं मुखतो मुख्ये प्रथमे वयसि मुख्यया वा वृत्त्या, पूजापुरःसरमभ्यागतायान्नार्थिने राद्धं संसिद्धं प्रयच्छतीति वाक्यशेषः। तस्य किं फलं स्यादित्युच्यते — मुखतः पूर्वे वयसि मुख्यया वा वृत्त्याऽस्मा अन्नदायान्नं राध्यते, यथादत्तमुपतिष्ठत इत्यर्थः। एवं मध्यतो मध्यमे वयसि मध्यमेन चोपचारेण। तथाऽन्ततोऽन्ते वयसि जघन्येन चोपचारेण परिभवेन तथैवास्मै राध्यते संसिध्यत्यन्नम्। य एवं वेद, य एवमन्नस्य यथोक्तं माहात्म्यं वेद, तद्दानस्य यथोक्तं फलमुपनयेत्।

पादयोः। विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति (२)। यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपासीत। प्रतिष्ठावान्भवति। तन्मह इत्युपासीत। महान्भवति। तन्मन इत्युपासीत। मानवान्भवति (३) तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः। तद्ब्रह्मेत्युपासीत। ब्रह्मवान्भवति।

देवताओं में होने वाली उपासना कही जाती है — तृप्तिरूप से ब्रह्म ही वृष्टि में, बलरूप से विद्युत् में उपासनीय है।।२।। यशरूप से पशुओं में, ज्योतिरूप से नक्षत्रों में, पुत्रादि प्रजा, पितृ ऋण से मुक्त होनारूप अमरत्व और आनन्दरूप से उपस्थ में, (स्थित ब्रह्म की उपासना करें) वह ब्रह्म सबका आधार है — ऐसा समझ कर उसकी उपासना करें, इसमें उपासक प्रतिष्ठावान् होता है। वह ब्रह्म महत्त्व गुण वाला है इस भाव से उसकी उपासना करें, इससे उपासक महान् होता है। वह मन ब्रह्म है इस प्रकार उपासना करें, इससे उपासक मनन करने में समर्थ होता है।।३।। वह 'नमः' है इस प्रकार ब्रह्म की उपासना करें, इससे सम्पूर्ण भोग्यपदार्थ उपासक के पास विनम्र होकर जाते हैं। वह ब्रह्म सबसे बड़ा है,

इदानीं ब्रह्मण उपासनप्रकार उच्यते —

क्षेम इति वाचि। क्षेमो नामोपात्तपरिरक्षणम्। ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठितमित्युपास्यम्। योगक्षेम इति, योगोऽनुपात्तस्योपादानम्। तौ हि योगक्षेमौ प्राणापानयोः सतोर्भवतो यद्यपि, तथाऽपि न प्राणापाननिमित्तावेव, किं तर्हि? ब्रह्मनिमित्तौ। तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयोः प्रतिष्ठितमित्युपास्यम्। एवमुत्तरेष्वन्येषु तेन तेनाऽऽत्मना ब्रह्मैवोपास्यम्। कर्मणो ब्रह्मनिर्वर्त्यत्वाद्धस्तयोः कर्मात्मना ब्रह्म प्रतिष्ठितमित्युपास्यम्। गतिरिति पादयोः विमुक्तिरिति पायौ। इत्येता मानुषीर्मनुष्येषु भवा मानुष्यः समाज्ञाः, आध्यात्मिक्यः समाज्ञा ज्ञानानि विज्ञानान्युपासनानीत्यर्थः।

अथानन्तरं दैवीर्दैव्यो देवेषु भवाः समाज्ञा उच्यन्ते। तृप्तिरिति वृष्टौ। वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्ब्रह्मैव तृप्त्यात्मना वृष्टौ व्यवस्थितमित्युपास्यम्। तथाऽन्येषु तेन तेनाऽऽत्मना ब्रह्मैवोपास्यम्। तथा बलरूपेण विद्युति। यशोरूपेण पशुषु। ज्योतीरूपेण

**तद्ब्रह्मणः परिमर इत्युपासीत। पर्येणं म्रियन्ते द्विषन्तः सपत्नाः। परि येऽप्रिया भ्रातृव्याः। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः (४)**

इस प्रकार उपासना करें। इससे वह ब्रह्म के समान गुण वाला होता है। वह ब्रह्म का परिमर (विद्युत्, वृष्टि, चन्द्रमा, आदित्य और अग्नि ये पाँच देवता जिसमें मरते हैं, ऐसा आकाश) है, इस प्रकार उसकी उपासना करें, इससे उस उपासक से द्वेष करने वाले प्रतिपक्षी मर जाते हैं तथा जो अप्रिय भाई के पुत्र होते हैं वे भी मर जाते हैं। वह जो इस पुरुष में है तथा जो उस आदित्य में है — एक ही है।।४।।

---

नक्षत्रेषु। प्रजातिरमृतममृतत्वप्राप्तिः पुत्रेण ऋणविमोक्षद्वारेणाऽऽनन्दः सुखमित्येतत्सर्वमुपस्थनिमित्तं ब्रह्मैवानेनाऽऽत्मनोपस्थे प्रतिष्ठितमित्युपास्यम्। सर्वं ह्याकाशे प्रतिष्ठितमतो यत्सर्वमाकाशे तद्ब्रह्मैवेत्युपास्यम्। तच्चाऽऽकाशं ब्रह्मैव। तस्मात्तत्सर्वस्य प्रतिष्ठेत्युपासीत। प्रतिष्ठागुणोपासनात्प्रतिष्ठावान्भवति। एवं पूर्वेष्वपि यद्यत्तदधीनं फलं तद्ब्रह्मैव तदुपासनात्तद्वान्भवतीति द्रष्टव्यम्। श्रुत्यन्तराच्च — "तं यथा यथोपासते तदेव भवति" (शतपथब्रा. १०-५-२-२०) इति।

तन्मह इत्युपासीत। महो महत्त्वगुणवत्तदुपासीत। महान्भवति। तन्मन इत्युपासीत। मननं मनः। मानवान्भवति मननसमर्थो भवति। तन्नम इत्युपासीत। नमनं नमो नमनगुणवत्तदुपासीत। नम्यन्ते प्रह्वी भवन्त्यस्मा उपासित्रे कामाः काम्यन्त इति भोग्या विषया इत्यर्थः। तद्ब्रह्मेत्युपासीत। ब्रह्म परिवृढतममित्युपासीत। ब्रह्मवांस्तद्गुणो भवति। तद्ब्रह्मणः परिमर इत्युपासीत। ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन्पञ्च देवता विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः। अतो वायुः परिमरः श्रुत्यन्तरप्रसिद्धेः। स एष एवायं वायुराकाशेनानन्य इत्याकाशो ब्रह्मणः परिमरस्तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत। पर्येनमेवंविदं प्रतिस्पर्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्त्यतो विशेष्यन्ते द्विषन्तः सपत्ना इति। ये एनं द्विषन्तः सपत्नास्ते परिम्रियन्ते प्राणाञ्जहति। किंच ये चाप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि ते च परिम्रियन्ते।

प्राणो वा अन्नं शरीरमन्नादमित्यारभ्याऽऽकाशान्तस्य कार्यस्यैवान्नान्नादत्वमुक्तम्। उक्तं नाम किं तेन, तेनैतत्सिद्धं भवति, कार्यविषय एव भोज्यभोक्तृत्वकृतः संसारो न त्वात्मनीति। आत्मनि तु भ्रान्त्योपचर्यते।

नन्वात्माऽपि परमात्मनः कार्यं ततो युक्तस्तस्य संसार इति। न। असंसारिण एव प्रवेशश्रुतेः। "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्याकाशादिकारणस्य ह्यसंसारिण एव परमात्मनः

मातृवद् बुद्धि परदारेषु रागापोहार्थं.
मातृवत् परदारेषु लोष्ठवत् परद्रव्येषु.
आत्मवत् सर्व भूतेषु यः पश्यति स पण्डितः

आदित्य और देह में स्थित चेतन की अभेद उपासना का फल।

एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मान-
मुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं
मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मा-
नमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य।
इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन्। एतत्साम
गायन्नास्ते। हा३वु हा३वु हा३वु (५)। अहो = विस्मयख्यापनार्थ

जो इस प्रकार जानने वाला है वह इस दृष्टादृष्टलोक से निवृत्त होकर इस अन्नमय आत्मा को प्राप्त कर इस प्राण में आत्मा के प्रति संक्रमण कर, इस मनोमय आत्मा के प्रति संक्रमण कर, इस विज्ञानमय आत्मा को प्राप्त कर तथा इस आनन्दमय आत्मा के प्रति संक्रमण कर इन लोकों में यथेच्छ भोगों को भोगता हुआ इच्छानुसार रूप धारण कर विचरता हुआ इस साम का गान करता है हा३वु, हा३वु, हा३वु।।५।।

---

कार्येऽनुप्रवेशः श्रूयते। तस्मात्कार्यानुप्रविष्टो जीव आत्मा पर एवासंसारी। सृष्ट्वाऽनुप्राविश-दिति समानकर्तृ (क) त्वोपपत्तेश्च। सर्गप्रवेशक्रिययोश्चैकश्चेत्कर्ता ततः क्त्वाप्रत्ययो युक्तः। प्रविष्टस्य तु भावान्तरापत्तिरिति चेत्। न। प्रवेशस्यान्यार्थत्वेन प्रत्याख्यातत्वात्। "अनेन जीवेने"ति (छा.उ. ६-३-२) विशेषश्रुतेर्धर्मान्तरेणानुप्रवेश इति चेत्। न। "तत्त्वमसी"ति (छा.उ. ६-८-७) पुनस्तद्भावोक्तेः। भावान्तरापन्नस्यैव तदपोहार्था संपदिति चेत्। न। "तत्सत्यं स आत्मा तत्त्वमसी"ति (छा.उ. ६-८-७) सामानाधिकरण्यात्। दृष्टं जीवस्य संसारित्वमिति चेत्। न। उपलब्धुरनुपलभ्यत्वात्। संसारधर्मविशिष्ट आत्मोपलभ्यत इति चेत्। न। धर्माणां धर्मिणोऽव्यतिरेकात्कर्मत्वानुपपत्तेः उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत्त्रासादि-दर्शनाद्दुःखित्वाद्यनुमीयत इति चेत्। न। त्रासादेर्दुःखस्य चोपलभ्यमानत्वान्नोपलब्धृधर्मत्वम्। कापिलकाणादादितर्कशास्त्रविरोध इति चेत्। न। तेषां मूलाभावे वेदविरोधे च भ्रान्तत्वोपपत्तेः। श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वमेकत्वाच्च।

कथमेकत्वमित्युच्यते —

स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्येवमादि पूर्ववत्सर्वम्। अन्नमयादि क्रमेणाऽऽनन्दमयमात्मानमुपसंक्रम्यैतत्साम गायन्नास्ते। सत्यं ज्ञानमित्यस्या ऋचोऽर्थो व्याख्यातो विस्तरेण तद्विवरणभूतयाऽऽनन्दवल्ल्या सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति तस्य फलवचनस्यार्थविस्तारो नोक्तः। के ते, किंविषया वा सर्वे कामाः, कथं वा ब्रह्मणा सह समश्नुत इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते। तत्र पितापुत्राख्या-यिकायां पूर्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तम्। प्राणादेराकाशान्तस्य च

ब्रह्म ज्ञानी के ज्ञान का विषय साम-

अहमन्नमहमन्नमहमन्नम्। अहमन्नादो३ऽह-
मन्नादो३ऽहमन्नादः। अहꣳ श्लोककृदहꣳ श्लोक- संघातस्य कर्ता चेतनावान्।
कृदहꣳश्लोककृत्। अहमस्मि प्रथमजा३ऋता३स्य।
पूर्वं देवेभ्यो अमृतस्य ना३भायि। यो मा ददाति स नाभि मध्यं
इदेव मा३ऽऽवाः। अहमन्नमन्नमदन्तमा३द्मि। अहं
विश्वं भुवनमभ्यभवा३म्। सुवर्न ज्योतीः। य एवं सुवर् + नः उपमा आदित्ये।

अन्नं यथाभूतं भवति। आदित्यमिव सकृद् विभातं।

विशुद्ध होता हुआ भी मैं भोग्य हूँ, मैं अन्न हूँ, मैं अन्न हूँ, मैं ही अन्नाद हूँ, मैं ही अन्न का भोक्ता हूँ, मैं ही अन्नाद हूँ, मैं ही श्लोककृत् (अन्न एवं अन्नाद के संघातकर्ता) हूँ, मैं ही श्लोककृत् हूँ, मैं ही श्लोककृत् हूँ। मैं ही मूर्तामूर्त जगत् के पहले हिरण्यगर्भ से उत्पन्न हुआ हूँ, मैं ही देवताओं से पूर्ववर्ती विराट् एवं अमरत्व का केन्द्र स्थान हूँ। जो अन्नरूप मुझे (अन्नार्थियों को) देता है वह इस प्रकार मेरी रक्षा करता है, किन्तु स्वयं अन्न भक्षण करने वाले को मैं अन्नरूप से भक्षण करता हूँ। मैं इस सम्पूर्ण भुवन का पराभव करता हूँ, हमारी ज्योति सूर्य के समान सदा प्रकाशरूप है, ऐसी यह

---

कार्यस्यान्नान्नादत्वेन विनियोगश्चोक्तः। ब्रह्मविषयोपासनानि च। ये च सर्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्यभेदविषया एते दर्शिताः। एकत्वे पुनः कामकामित्वानुपपत्तिः। भेदजातस्य सर्वस्याऽऽत्मभूतत्वात्। तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्वान्कामानेवंवित्समश्नुते इत्युच्यते। सर्वात्मत्वापत्तेः। कथं सर्वात्मत्वापत्तिरित्याह। पुरुषादित्यस्थात्मैकत्वविज्ञानेनापोह्योत्कर्षापकर्षावन्नमयाद्यात्मनोऽविद्याकल्पितान्क्रमेण संक्रम्याऽऽनन्दमयान्तान्सत्यं ज्ञानमनन्तं ब्रह्माऽदृश्यादिधर्मकं स्वाभाविकमानन्दमजममृत-मभयमद्वैतं फलभूतमापन्न इमाँल्लोकान्भूरादीननुसंचरन्निति व्यवहितेन संबन्धः। कथमनु-संचरन्। कामान्नी कामतोऽन्नमस्येति कामान्नी। तथा कामतो रूपाण्यस्येति कामरूपी। अनुसंचरन्सर्वात्मनेमाँल्लोकानात्मत्वेनानुभवन्। किम्, एतत्साम गायन्नास्ते। समत्वा-द्ब्रह्मैव साम, सर्वानन्यरूपं गायञ्शब्दयन्नात्मैकत्वं प्रख्यापयँल्लोकानुग्रहार्थं तद्विज्ञानफलं चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति।

कथम्। हा३वु हा३वु हा३वु। अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम्। कः पुनरसौ विस्मय इत्युच्यते — अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च। किंचाहमेव श्लोककृत्। श्लोको नामान्नान्नादयोः संघातस्तस्य कर्ता चेतनावान्। अन्नस्यैव वा

वेद। इत्युपनिषत् (६)।।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि तृतीये भृगुवल्ल्यध्याये
दशमोऽनुवाकः।।१०।।

ब्रह्मविद्या है। जो इसे इस प्रकार जानता है, उसे पूर्वोक्त फल मिलता है।।६।।

---

परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य पारार्थ्येन हेतुना संघातकृत्। त्रिरुक्तिर्विस्मयत्वख्यापनार्था। अहमस्मि भवामि। प्रथमजाः प्रथमजः प्रथमोत्पन्नः। ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतो देवेभ्यश्च पूर्वममृतस्य नाभिरमृतत्वस्य नाभिर्मध्यं मत्संस्थममृतत्वं प्राणिनामित्यर्थः।

यः कश्चिन्मा मामन्नमन्नार्थिभ्यो ददाति प्रयच्छत्यन्नात्मना ब्रवीति स इदित्थमेवमविनष्टं यथाभूतमावाः अवतीत्यर्थः। यः पुनरन्यो मामदत्त्वाऽर्थिभ्यः काले प्राप्तेऽन्नमत्ति तमन्नमदन्तं भक्षयन्तं पुरुषमहमन्नमेव संप्रत्यद्मि भक्षयामि। अत्राऽऽहैवं तर्हि बिभेमि सर्वात्मत्वप्राप्तेर्मोक्षादस्तु संसार एव यतो मुक्तोऽप्यहमन्नभूत आद्यः स्यामन्नस्यैवं मा भैषीः संव्यवहारविषयत्वात्सर्वकामाशनस्यातीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विद्वांस्तस्य नैव द्वितीयं वस्त्वन्तरमस्ति यतो बिभेत्यतो न भेतव्यं मोक्षात्। एवं तर्हि किमिदमाह — अहमन्नमहमन्नाद इत्युच्यते योऽयमन्नान्नादादिलक्षणः संव्यवहारः कार्यभूतः स संव्यवहारमात्रमेव न परमार्थवस्तु। स एवंभूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेणासन्निति कृत्वा ब्रह्मविद्याकार्यस्य ब्रह्मभावस्य स्तुत्यर्थमुच्यते अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नादोऽहमन्नाद इत्यादि। अतो भयादिदोषगन्धोऽप्यविद्यानिमित्तोऽविद्योच्छेदाद्ब्रह्मभूतस्य नास्तीत्यहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिर्भवन्तीति वाऽस्मिन्भूतानीति भुवनमभ्यभवा३मभिभवामि परेणेश्वरेण स्वरूपेण।

सुवर्न ज्योतीः सुवरादित्यो नकार उपमार्थे। आदित्य इव सकृद्विभातमस्मदीयं ज्योतीर्ज्योतिः। प्रकाश इत्यर्थः। इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं यथोक्तमोमिति।।१-६।।

*इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्ल्यध्यायभाष्ये दशमोऽनुवाकः।।१०।।*

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।।

ॐ शान्तिः शान्तिः शान्तिः।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि तृतीयो भृगुवल्ल्यध्यायःसमाप्तः।।३।।

समाप्तेयं कृष्णयजुर्वेदीया तैत्तिरीयोपनिषत्

(वह ब्रह्म आचार्य और शिष्य) हम दोनों की साथ-साथ रक्षा करे, हम दोनों का साथ-साथ पालन करे, हम साथ-साथ विद्याजन्य सामर्थ्य प्राप्त करें, हम दोनों का अध्ययन किया हुआ तेजस्वी (अर्थज्ञान के योग्य) हो और हम परस्पर विद्वेष न करें। त्रिविध ताप की शान्ति हो।

इति श्रीमत्परमहंसपरिव्रजकाचार्ययतीन्द्रकुलतिलककैलासपीठाधीश्वरपरामदर्शमहामण्डलेश्वरस्वामिविद्यानन्दगिरि-विरचितातैत्तिरीयोपनिषद्तृतीयभृगुवल्ल्यध्यायस्य विद्यानन्दीमिताक्षरा ।।३।।

---

(भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व त्रयोदशान्नं प्राणो मनो
विज्ञानं द्वादश द्वादशाऽऽनन्दो दशान्नं न निन्द्यादन्नं न परिचक्षी-
तान्नं बहु कुर्वीतैकादशैकादश) न कंचनैकषष्टिर्दश।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य शाङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये तृतीयो भृगुवल्ल्यध्यायः।।३।।

✦ चतुर्थमाह्निकम् ✦

उपोद्घात = सम्बन्धभाष्य में मुख्य अधिकारी तुरीय आश्रमी सन्यासी है।
सृष्टि में पर एवं अपर श्रेष्ठता का बारे में संशय होने पर परविद्या को ही श्रेष्ठ माना गया।
परमात्मा पञ्च भूतों को बनाता है। पञ्चीकरण करता है. अपर ब्रह्म जन्म.

उपक्रम में अपर ब्रह्म ही है। उपसंहार में प्रज्ञानं ब्रह्म. आरम्भ में अपर ब्रह्म.

# ★ ऐतरेयोपनिषत् ★

## अध्याय प्रकाशिका



(1) उपक्रम :- आत्मा वा इदमेक एवाग्रे आसीत (1-1-1).
उपसंहार :- प्रज्ञानं ब्रह्म. (3-5-3)

(2) अभ्यास :- स इमान् लोकान् असृजत (1-1-2)
स ईक्षत एमेनु लोकान्नु सृजा इति (1-1-3)

(3) अपूर्वता :- स जातो भूतानि अभिव्यैख्यत (1-3-13)

(4) फल :- स एतेन प्रज्ञेन आत्मना.
अस्माद् लोकाद् उत्क्रम्य
अमुष्मिन् स्वर्गे लोके (3-5-4)

(5) अर्थवाद :- ता एता देवता सृष्टाः (2-1-1), गर्भेनुसन्नन्वेषामवेदमहं देवानि (2-4-5)

(6) उपपत्ति : (a) स इमान् लोकान् असृजत (1-1-2)

(b) स एतमेव सीमानं विदार्य एतया द्वारा प्रापद्यत (1-3-12)

ॐ तत्सद्ब्रह्मणे नमः।

ऋग्ब्राह्मणारण्यकाण्डान्तर्गतद्वितीयारण्यकस्था ऐतरेयशाखा.

# ऐतरेयोपनिषत्

## भगवत्पादाद्यशङ्कराचार्यविरचितशाङ्करभाष्यसमेता

* * *

### अथ श्रीमच्छङ्करभगवत्पादाचार्यविरचितं उपोद्घातभाष्यम्

उपासना

परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन। सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता। "एतत्सत्यं ब्रह्मप्राणाख्यम्" (ऐ. आ. २/१/५) "एष एको देवः" "एतस्यैव प्राणस्य सर्वे देवा विभूतयः" (ऐ. आ. २/१/७) "एतस्य प्राणस्याऽऽत्मभावं गच्छन्देवता अप्येति" (ऐ. आ. २-२-४) इत्युक्तम्। सोऽयं देवताप्ययलक्षणः परः पुरुषार्थः। एष मोक्षः। स चायं यथोक्तेन ज्ञानकर्मसमुच्चयसाधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नास्तान्निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थम् 'आत्मा वा इदम्' इत्याद्याह।

प्राण

कथं पुनरकर्मसंबन्धिकेवलात्मविज्ञानविधानार्थ उत्तरो ग्रन्थ इति गम्यते। अन्यार्थानवगमात्। तथा च पूर्वोक्तानां देवतानामग्न्यादीनां संसारित्वं दर्शयिष्यत्यशनायादिदोषवत्त्वेन तमशनापिपासाभ्यामन्ववार्जदित्यादिना। अशनायादिमत्सर्वं संसार एव परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः। भवत्वेवं केवलात्मज्ञानं मोक्षसाधनं न त्वत्राकर्म्येवाधिक्रियते। विशेषाश्रवणात्। अकर्मिण आश्रम्यन्तरस्येहाश्रवणात्। कर्म च बृहतीसहस्रलक्षणं प्रस्तुत्यानन्तरमेवाऽऽत्मज्ञानं प्रारभ्यते। तस्मात्कर्म्येवाधिक्रियते।

न च कर्मासंबन्ध्यात्मविज्ञानं पूर्ववदन्त उपसंहारात्। यथा कर्मसंबन्धिनः पुरुषस्य सूर्यात्मनः स्थावरजङ्गमादिसर्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च ' सूर्य आत्मा' (ऐ. आ. २-२-४) इत्यादिना, तथैव "एष ब्रह्मैष इन्द्रः" इत्याद्युपक्रम्य सर्वप्राण्यात्मत्वम्। यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रमित्युपसंहरिष्यति। तथा च संहितोपनिषदि – "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते" (ऐ. आ. ३-२-३) इत्यादिना कर्मसंबन्धित्वमुक्त्वा "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" (ऐ. आ. ३-२-३) इत्युपसंहरति। तथा तस्यैव "योऽयमशरीरः प्रज्ञात्मा" (ऐ. आ. ३-२-३) इत्युक्तस्य यश्चासावादित्य एकमेव तदिति विद्यादित्येकत्वमुक्तम्। इहापि कोऽयमात्मेत्युपक्रम्य प्रज्ञात्मत्वमेव 'प्रज्ञानं ब्रह्म' इति दर्शयिष्यति। तस्मान्नाकर्मसंबन्ध्यात्मज्ञानम्।

मोक्ष ज्ञान से ही, ज्ञान के लिये सर्व कर्म सन्यास.
जो नरपति घर में ज्ञान पाता तो क्यों जंगल जाते.
लाठा पानी:- जोतखुतरया, बीज बोवरया, सींच सिंचरया, काट कटरया, पीस पीसरया. खा खाकरया.

कथम्?

पुनरुक्त्याऽऽनर्थक्यमिति चेत्, "प्राणो वा अहमस्म्यृषे" (ऐ. आ. २-२-३) इत्यादिब्राह्मणेन "सूर्य आत्मा" (ऐ. आ. २-२-४) इति मन्त्रेण च निर्धारितस्याऽऽत्मन "आत्मा वा इदम्" इत्यादिब्राह्मणेन 'कोऽयमात्मा' इति प्रश्नपूर्वकं पुनर्निर्धारणं पुनरुक्तमनर्थकमिति चेत्। न। तस्यैव धर्मान्तरविशेषनिर्धारणार्थत्वान्न पुनरुक्ततादोषः। कथम्? तस्यैव कर्मसंबन्धिनो जगत्सृष्टिस्थितिसंहारादिधर्मविशेषनिर्धारणार्थत्वात्। केवलोपास्त्यर्थत्वाद्वा। अथवाऽऽत्मेत्यादिपरो ग्रन्थसंदर्भ आत्मनः कर्मिणः कर्मणोऽन्यत्रोपासनाऽप्राप्तौ कर्मप्रस्तावेऽविहितत्वात्केवलोऽप्यात्मोपास्य इत्येवमर्थः। भेदाभेदोपास्यत्वाद्वैक एवाऽऽत्मा कर्मविषये भेददृष्टिभाक्, स एवाकर्मकालेऽभेदेनाप्युपास्य इत्येवमपुनरुक्तता।

Para change not necessary. (P.C.N.N)

"विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" (ई. उ. ११) इति। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः" (ई. उ. २) इति च वाजिनाम्। न च वर्षशतात्परमायुर्मर्त्यानाम्। येन कर्मपरित्यागेनाऽऽत्मानमुपासीत। दर्शितं च "तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति" (ऐ. आ. २-३-८)। वर्षशतं चाऽऽयुः कर्मणैव व्याप्तम्। दर्शितश्च मन्त्रः "कुर्वन्नेवेह कर्माणि" इत्यादिः। तथा "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्याद्याश्च। "तं यज्ञपात्रैर्दहन्ति" इति च। ऋणत्रयश्रुतेश्च।

तत्र पारिव्राज्यादिशास्त्रं 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ. ३-५-१) इत्याद्यात्मज्ञानस्तुतिपरोऽर्थवादोऽनधिकृतार्थो वा। न। परमार्थविज्ञाने फलादर्शने क्रियानुपपत्तेः। यदुक्तं "कर्मिण एव चाऽऽत्मज्ञानं कर्मसंबन्धि च" इत्यादि तन्न। परं ह्याप्तकामं सर्वसंसारदोषवर्जितं ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाने कृतेन कर्तव्येन वा प्रयोजनमात्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते। फलादर्शनेऽपि नियुक्तत्वात्करोतीति चेत्। न। नियोगाविषयात्मदर्शनादिष्टयोगमनिष्टवियोगं चाऽऽत्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके, न तु तद्विपरीतो नियोगाविषयब्रह्मात्मत्वदर्शी। ब्रह्मात्म- त्वदर्श्यपि संश्चेन्नियुज्येत नियोगाविषयोऽपि सन्न कश्चिन्न नियुक्त इति सर्वं कर्म सर्वेण सर्वदा कर्तव्यं प्राप्नोति। तच्चानिष्टम्। न च स नियोक्तुंशक्यते केनचित्। आम्नायस्यापि तत्प्रभवत्वान्न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते, नापि बहुवित्स्वाम्यविवेकिना भृत्येन। आम्नायस्य नित्यत्वे सति स्वातन्त्र्यात्सर्वान्प्रति नियोक्तृत्वसामर्थ्यमिति चेत्। न। उक्तदोषात्। तथाऽपि सर्वेण सर्वदा सर्वं शिष्टं कर्म कर्तव्यमित्युक्तो दोषोऽपरिहार्य एव। तदपि शास्त्रेणैव विधीयत इति चेत्। यथा कर्मकर्तव्यता

शास्त्रेण कृता तथा तदप्यात्मज्ञानं तस्यैव कर्मिणः शास्त्रेण विधीयत इति चेन्न। विरुद्धार्थबोधकत्वानुपपत्तेः। न ह्येकस्मिन्कृताकृर्तासंबन्धित्वं तद्विपरीतत्वं च बोधयितुं शक्यम्। शीतोष्णतामिवाग्नेः।

न चेष्टयोगचिकीर्षाऽऽत्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता, सर्वप्राणिनां तद्दर्शनाच्छास्त्रकृतं चेत्तदुभयं गोपालादीनां न दृश्येताशास्त्रज्ञत्वात्तेषाम्। यद्धि स्वतोऽप्राप्तं तच्छास्त्रेण बोधयितव्यम्। तच्चेत्कृतकर्तव्यताविरोध्यात्मज्ञानं शास्त्रेण कृतं, कथं तद्विरुद्धां कर्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तम इव च भानौ।

न बोधयत्येवेति चेत्। न। 'स मे आत्मेति विद्यात्'(ऐ. आ. ३-२-४) 'प्रज्ञानं ब्रह्म' इति चोपसंहारात्। 'तदात्मानमेवावेत्' (बृ. १-४-१०) 'तत्त्वमसि' (छा. ६-८-७) इत्येवमादिवाक्यानां तत्परत्वात्। उत्पन्नस्य च ब्रह्मात्मविज्ञानस्याबाध्यमानत्वान्नानुत्पन्नं भ्रान्तं वेति शक्यं वक्तुम्।

त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत् "नाकृतेनेह कश्चन" (गी. ३-२८) इतिस्मृतेः। ये आहुर्विदित्वा ब्रह्म व्युत्थानमेव कुर्यादिति। तेषामप्येष समानो दोषः प्रयोजनाभाव इति चेत्। न। अक्रियामात्रत्वाद्व्युत्थानस्य। अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्मः। सर्वप्राणिनां तद्दर्शनात्। प्रयोजनतृष्णया च प्रेर्यमाणस्य वाङ्मनःकायैः प्रवृत्तिदर्शनात्। "सोऽकामयत जाया मे स्यात्" (बृ. १-४-२७) इत्यादिना पुत्रवित्तादि पाङ्क्तलक्षणं काम्यमेवेति "उभे ह्येते साध्यसाधनलक्षणे एषणे एव" इति वाजसनेयिब्राह्मणेऽवधारणात्।

अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्तलक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्तेः क्रियाऽभावमात्रं व्युत्थानं न तु यागादिवदनुष्ठेयरूपं भावात्कर्मं, तच्च विद्यावत्पुरुषधर्म इति न प्रयोजनमन्वेष्टव्यम्। न हि तमसि प्रविष्टस्योदित आलोके यद्गर्तपङ्ककण्टकाद्यपतनं तत्किंप्रयोजनमिति प्रश्नार्हम्। व्युत्थानं तर्ह्यर्थप्राप्तत्वान्न चोदनार्हमिति। गार्हस्थ्ये चेत्परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्वत आसनं न ततोऽन्यत्र गमनमिति चेत्। न। कामप्रयुक्तत्वाद्गार्हस्थ्यस्य। 'एतावान्वै कामः (बृ. २-४-२७) इति। 'उभे ह्येते एषणे एव' (बृ. ३-५-१) इत्यवधारणात्। कामनिमित्तपुत्रवित्तादिसंबन्धनियमाभावमात्रमेव न हि ततोऽन्यत्र गमनं व्युत्थानमुच्यते। अतो न गार्हस्थ्य एवाकुर्वत आसनमुत्पन्नविद्यस्य। एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुषः सिद्धा।

अत्र केचिद्गृहस्था भिक्षाटनादिभयात्परिभवाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः। 'भिक्षोरपि भिक्षाटनादिनियमदर्शनाद्देहधारणमात्रार्थिनो, गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थमशनाच्छादनमात्रमुपजीवतो गृहे एवास्त्वासनमिति।' न, स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत्। स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावेऽर्थाद्भिक्षुकत्वमेव। शरीरधारणार्थायां भिक्षाटनादिषु प्रवृत्तौ यथा नियमो भिक्षोः शौचादौ च तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तियावज्जीवादिश्रुतिनियुक्तत्वात्प्रत्यवायपरिहारायेति। एतन्नियोगाविषयत्वेन विदुषः प्रयु(त्यु)क्तमशक्यनियोगत्वाच्चेति।

यावज्जीवादिनित्यचोदनानर्थक्यमिति चेत्। न। अविद्वद्विषयत्वेनार्थवत्त्वात्। यत्तु भिक्षोः शरीरधारणमात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं, तत्प्रवृत्तेर्न प्रयोजकम्। आचमनप्रवृत्तस्य पिपासापगमवन्नान्यप्रयोजनार्थत्वमवगम्यते। न चाग्निहोत्रादीनां तद्वदर्थप्राप्तप्रवृत्तिनियतत्वोपपत्तिः।

अर्थप्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न एवेति चेत्। न। तन्नियमस्य पूर्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थप्राप्तस्य व्युत्थानस्य पुनर्वचनाद्विदुषः कर्तव्यत्वोपपत्तिः।

अविदुषाऽपि मुमुक्षुणा पारिव्राज्यं कर्तव्यमेव। तथा च "शान्तो दान्तः" (बृ. ४-४-२३) इत्यादिवचनं प्रमाणम्। शमदमादीनां चाऽऽत्मदर्शनसाधनानामन्याश्रमेष्वनुपपत्तेः। "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्" (श्वे. ६-२१) इति च श्वेताश्वतरे विज्ञायते। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (कै. ३) इति च कैवल्यश्रुतिः। "ज्ञात्वा नैष्कर्म्यमाचरेत्" इति च स्मृतेः। "ब्रह्माश्रमपदे वसेत्" इति च। ब्रह्मचर्यादिविद्यासाधनानां च साकल्येनान्त्याश्रमिषूपपत्तेर्गार्हस्थ्येऽसंभवात्।

न चासंपन्नं साधनं कस्यचिदर्थस्य साधनायालम्। यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्माणि तेषां परं फलमुपसंहृतं देवताप्ययलक्षणं संसारविषयमेव।

यदि कर्मिण एव परमात्मविज्ञानमभविष्यत्संसारविषयस्यैव फलस्योपसंहारो नोपापत्स्यत। अङ्गफलं तदिति चेन्न। तद्विरोध्यात्मवस्तुविषत्वादात्मविद्यायाः।

निराकृतसर्वनामरूपकर्मपरमार्थात्मवस्तुविषयं ज्ञानममृतत्वसाधनम्। गुणफलसंबन्धे हि निराकृतसर्वविशेषात्मवस्तुविषयत्वं विज्ञानस्य न प्राप्नोति तच्चानिष्टम्। "यत्र त्वस्य सर्वमात्मैवाभूत्" (बृ. ४-५-१५) इत्यधिकृत्य क्रियाकारकफलादिसर्वव्यवहार-निराकरणाद्विदुषः। तद्विपरीतस्याविदुषो "यत्र हि द्वैतमिव" (बृ. ४-५-१५) इत्युक्त्वा क्रियाकारकफलरूपस्यैव संसारस्य दर्शितत्वाच्च वाजसनेयिब्राह्मणे। तथेहापि देवताप्ययसंसारविषयं यत्फलमशनायादिमद्वस्त्वात्मकं तत्फलमुपसंहृत्य केवलसर्वात्म-कवस्तुविषयं ज्ञानममृतत्वाय वक्ष्यामीति प्रवर्तते।

ऋणप्रतिबन्धश्चाविदुष एव मनुष्यपितृदेवलोकप्राप्तिं प्रति, न विदुषः। "सोऽयं मनुष्यलोकः पुत्रेणैव" (बृ. १-५-१६) इत्यादिलोकत्रयसाधननियमश्रुतेः। विदुषश्चर्णप्रतिबन्धाभावो दर्शित आत्मलोकार्थिनः "किं प्रजया करिष्यामः" (बृ. ४-४-२२) इत्यादिना। तथा "एतद्ध स्म वै तद्विद्वांस आहुरृषयः कावषेयाः" इत्यादि। "एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः" (कौ. २-५) इति च कौषीतकिनाम्। छा. 6-4-5

कावषेय ऋषि बोले मैं कैसे अध्ययन करूं, कैसे होम करूं ॥

अविदुषस्तर्ह्यृणानपाकरणे पारिव्राज्यानुपपत्तिरिति चेत्। न। प्राग्गार्हस्थ्य-प्रतिपत्तेरृणित्वासंभवादधिकारानारूढोऽप्यृणी चेत्स्यात्सर्वस्यर्णित्वमित्यनिष्टं प्रसज्येत। प्रतिपन्नगार्हस्थ्यस्यापि "गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इत्यात्मदर्शनोपायसाधनत्वेनेष्यत एव पारिव्राज्यम्। यावज्जीवादिश्रुतीनामविद्वदमुमु-क्षुविषये कृतार्थता। छान्दोग्ये च केषांचिद्द्वादशरात्रमग्निहोत्रं हुत्वा तत ऊर्ध्वं परित्यागः श्रूयते।

यत्त्वनधिकृतानां पारिव्राज्यमिति। तन्न। तेषां पृथगेव "उत्सन्नाग्निरनग्निको वा" (जा. ४) इत्यादिश्रवणात्सर्वस्मृतिषु चाविशेषेणाऽऽश्रमविकल्पः प्रसिद्धः समुच्चयश्च।

यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्यशास्त्रार्थत्वे गृहे वने वा तिष्ठतो न विशेष इति तदसत्। व्युत्थानस्यैवार्थप्राप्तत्वान्नान्यत्रावस्थानं स्यात्। अन्यत्रावस्थानस्य कामकर्मप्रयुक्तत्वं ह्यवोचाम। तदभावमात्रं व्युत्थानमिति च।

(P.C.N.M)

यथाकामित्वं तु विदुषोऽत्यन्तमप्राप्तमत्यन्तमूढविषयत्वेनावगमात्। तथा शास्त्रचोदितमपि कर्माऽऽत्मविदोऽप्राप्तुं(प्तं) गुरुभारतयाऽवगम्यते, किमुतात्यन्ताविवेक-निमित्तं यथाकामित्वम्। न ह्युन्मादतिमिरदृष्ट्युपलब्धं वस्तु तदपगमेऽपि तथैव स्यादुन्माद-

## हरिः ॐ

**वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठित-**
**माविरावीर्म एधि वेदस्य म आणी स्थः श्रुतं मे मा**
**प्रहासीरनेनाधीतेनाहोरात्रान्त्संदधाम्यृतं वदिष्यामि**

मेरी वाणी में मन प्रतिष्ठित हो और मन में वाणी प्रतिष्ठित हो (अर्थात् मन से जैसा निश्चय किया हो, वाणी वैसे ही बोले और जैसे वाणी बोले मनसे वैसे ही चिन्तन हो, दोनों परस्पर अनुकूल रहें)। हे परमात्मन्! तुम मेरे सामने प्रकट हो जाओ, हे वाक् और मन! मेरे प्रति वेद को लावो, मेरा श्रवण किया हुआ मुझे न त्यागे, अधीत शास्त्रों के द्वारा मैं दिन रात को एक करदूँ – अर्थात् दिन रात अध्ययन चलता रहे। मैं वाचिक सत्य का भाषण करूँ और मानसिक सत्य को ही बोलूँ। यह ब्रह्म मेरी रक्षा करे, वक्ता की रक्षा करे, वह मेरी रक्षा करे और वक्ता की रक्षा करे, वक्ता की रक्षा करे। त्रिविध ताप की शान्ति हो।

---

तिमिरदृष्टिनिमित्तत्वादेव तस्य। तस्मादात्मविदो व्युत्थानव्यतिरेकेण न यथाकामित्वं न चान्यत्कर्तव्यमित्येतत्सिद्धम्।

यत्तु – "विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह" (ई. ११) इति, न तत्र विद्यावतो विद्यया सहाविद्याऽपि वर्तत इत्ययमर्थः। कस्तर्ह्येकस्मिन्पुरुष एकदैव न सह संबध्येयाता-मित्यर्थः। यथा शुक्तिकायां रजतशुक्तिकाज्ञाने एकस्य पुरुषस्य। "दूरमेते विपरीते विषूची अविद्या या च विद्या इति ज्ञाता" (का. १-२-४) इति हि काठके। तस्मान्न विद्यायां सत्यामविद्यासंभवोऽस्ति। "तपसा ब्रह्म विजिज्ञासस्व" (तै. ३-२) इत्यादिश्रुतेः, तपआदिविद्योत्पत्तिसाधनं गुरूपासनादि च कर्माविद्यात्मकत्वादविद्योच्यते। तेन विद्यामुत्पाद्य मृत्युं काममतितरति। ततोनिष्कामस्त्यक्तैषणो ब्रह्मविद्ययाऽमृतत्वमश्नुते इत्येतमर्थं दर्शयन्नाह – "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" (ई. ११) इति। यत्तु पुरुषायुः सर्वं कर्मणैव व्याप्तं "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः" (ई. २) इत्यविद्वद्विषयत्वेन परिहृतमितरथाऽसंभवात्। यत्तु वक्ष्यमाणमपि पूर्वोक्तं तुल्यत्वा-त्कर्मणाऽविरुद्धमात्मज्ञानमिति, तत्सविशेषनिर्विशेषात्मतया प्रत्युक्त मुत्तरत्र व्याख्याने च दर्शयिष्यामः। अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्शनार्थमुत्तरो ग्रन्थ आरभ्यते।

आत्मेति। आत्माऽऽप्नोतेरत्तेरततेर्वा परः सर्वज्ञः सर्वशक्तिरशनायादिसर्व-

सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु
मामवतु वक्तारमवतु वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः।।

ॐ आत्मा वा इदमेक एवाग्र आसीत्।
नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजा इति।।१।।

संसार की सृष्टि से पूर्व यह नाम-रूपात्मक जगत् एकमात्र आत्मा ही था। उससे भिन्न कोई क्रियाशील वस्तु नहीं थी, उसने चिन्तन किया कि मैं लोकों की रचना करूँ।।१।।

---

संसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽद्वयो वा इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतः सृष्टेः प्रागासीत्। किं नेदानीं स एवैकः। न। कथं तर्ह्यासीदित्युच्यते? यद्यपीदानीं स एवैकस्तथाऽप्यस्ति विशेषः। प्रागुत्पत्तेरव्याकृतनामरूपभेदमात्म (भेदात्म) भूतमात्मैकशब्दप्रत्ययगोचरं, जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरं चेति विशेषः।

यथा सलिलात्पृथक्फेननामरूपव्याकरणात्प्राक्सलिलैकशब्दप्रत्ययगोचरमेव फेनं यदा सलिलात्पृथङ्नामरूपभेदेन व्याकृतं भवति तदा सलिलं फेनं चेत्यनेकशब्दप्रत्यय-भाक्सलिलमेवेति चैकशब्दप्रत्ययभाक्च फेनं भवति तद्वत्।

नान्यत्किंचन न किंचिदपि मिषन्निमिषद्व्यापारवदितरद्वा। यथा सांख्यानामनात्म-पक्षपाति स्वतन्त्रं प्रधानम्। यथा च काणादानामणवो न तद्वदिहान्यदात्मनः किंचिदपि वस्तु विद्यते। किं तर्ह्यात्मैवैक आसीदित्यभिप्रायः।

स सर्वज्ञस्वाभाव्यादात्मैकः एव सन्नीक्षत लोकान्नु सृजा इति। ननु प्रागुत्पत्तेर-कार्यकरणत्वात्कथमीक्षितवान्। नायं दोषः। सर्वज्ञस्वाभाव्यात्। तथा च मन्त्रवर्णः:- "अपाणिपादो जवनो ग्रहीता" (श्वे. ३-१९) इत्यादिः। केनाभिप्रायेणेत्याह लोकानम्भः:-प्रभृतीन्प्राणिकर्मफलोपभोगस्थानभूतान्नु सृजै सृजेऽहमिति।।१।।

**स इमाल्ँलोकानसृजत। अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः।।२।।**

उस आत्मा ने अम्भ (शब्द से कहे जाने वाले लोक) मरीचि, मर और आप इन लोकों की सृष्टि की, जो द्युलोक से परे है और स्वर्ग जिसका आश्रय है, वह अम्भ है। द्युलोक से नीचे भुवर्लोक मरीचि, पृथिवी मरलोक है (क्योंकि उसमें प्राणी मरते है) और जो पृथिवी के नीचे वह आप है (क्योंकि वह नीचे के लोक में रहने वाले प्राणियों से प्राप्त किया जाता है)।।२।।

---

एवमीक्षित्वाऽऽलोच्य स आत्मेमाल्ँलोकानसृजत सृष्टवान्। यथेह बुद्धिमांस्तक्षादिरेवंप्रकारान्प्रासादादीन्सृज इतीक्षित्वाऽनन्तरं प्रासादादीन्सृजति, तद्वत्।

ननु सोपादानस्तक्षादिः प्रासादादीन्सृजतीति युक्तं निरुपादानस्त्वात्मा कथं लोकान्सृजतीति। नैष दोषः। सलिलफेनस्थानीये आत्मभूते अव्याकृते आत्मैकशब्दवाच्ये व्याकृतफेनस्थानीयस्य जगत उपादानभूते संभवतः। तस्मादात्मभूतनामरूपोपादानः सन्सर्वज्ञो जगन्निर्मिमीते इत्यविरुद्धम्।

अथवा यथा विज्ञानवान्मायावी निरुपादान आत्मानमेवाऽऽत्मान्तरत्वेनाऽऽकाशेन गच्छन्तमिव निर्मिमीते तथा सर्वज्ञो देवः सर्वशक्तिर्महामाय आत्मानमेवाऽऽत्मान्तरत्वेन जगद्रूपेण निर्मिमीत इति युक्ततरम्। एवं च सति कार्यकारणोभयासद्वाद्यादिपक्षाश्च न प्रसज्जन्ते सुनिराकृताश्च भवन्ति।

काँल्लोकानसृजतेत्याह —

अम्भो मरीचीर्मरमाप इति। आकाशादिक्रमेणाण्डमुत्पाद्याम्भःप्रभृतील्ँलोकानसृजत। तत्राम्भःप्रभृतीन्स्वयमेव व्याचष्टेश्रुतिः। अदस्तदम्भःशब्दवाच्यो लोकः परेण दिवं द्युलोकात्परेण परस्तात्सोऽम्भःशब्दवाच्योऽम्भो भरणात्। द्यौः प्रतिष्ठाऽऽश्रयस्तस्याम्भसो लोकस्य। द्युलोकादधस्तादन्तरिक्षं यत्तन्मरीचयः। एकोऽप्यनेकस्थानभेदत्वाद्बहुवचनभाङ्मरीचय इति। मरीचिभिर्वा रश्मिभिः संबन्धात्। पृथिवी मरो म्रियन्तेऽस्मिन्भूतानीति या अधस्तात्पृथिव्यास्ता आप उच्यन्त आप्नोतेर्लोकाः। यद्यपि पञ्चभूतात्मकत्वं लोकानां तथाऽप्यब्बाहुल्यादब्नामभिरेवाम्भो मरीचीर्मरमाप इत्युच्यन्ते।।२।।

स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति।

सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्।।३।।

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डम्।

मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां

प्राणः, प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां

चक्षुश्चक्षुष आदित्यः, कर्णौ निरभिद्येतां, कर्णाभ्यां

श्रोत्रं, श्रोत्राद्दिशस्त्वङ्निरभिद्यत, त्वचो लोमानि,

उसने फिर विचार किया कि ये लोक तो बन गये (किन्तु रक्षक के विना ये नष्ट हो जायेंगे अतः इन) लोकों की रक्षा के लिए अब मैं लोकपालों की रचना करूँ, ऐसा विचार कर उसने जल (प्रधान पंचभूतों) से ही एक पुरुष निकालकर अवयवयुक्त किया।।३।।

उस पुरुषाकार पिण्ड को लक्ष्य में रखकर ईश्वर ने संकल्परूप तप किया। ईश्वर के संकल्परूप तप से तपे हुए पिण्ड से अण्डे के समान मुख प्रकट हुआ, मुख से वाणी और वाणी से (उसका अभिमानी) अग्निदेव उत्पन्न हुआ, नासिका छिद्रों से प्राण प्रकट हुआ और प्राण से उसका अभिमानी वायु उत्पन्न हुआ, नेत्रगोलक प्रकट हुए, नेत्रों से चक्षुरिन्द्रिय और चक्षु से आदित्य उत्पन्न हुआ। श्रोत्रगोलक उत्पन्न हुए, श्रोत्रगोलक से श्रोत्रेन्द्रिय और श्रोत्र से दिशाएँ उत्पन्न हुई। त्वक्गोलक उत्पन्न हुआ, त्वचा से लोम और लोमों से

---

सर्वप्राणिकर्मफलोपादानाधिष्ठानभूतांश्चतुरो लोकान्सृष्ट्वा-स ईश्वरः पुनरेवेक्षत। इमे न्वम्भःप्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः। तस्मादेषां रक्षणार्थं लोकपालाँल्लोकानां पालयितॄन्नु सृजै सृजेऽहमिति।

एवमीक्षित्वा—

सोऽद्भ्य एवाप्प्रधानेभ्य एव पञ्चभूतेभ्यो येभ्योऽम्भःप्रभृतीन्सृष्टवांस्तेभ्य एवेत्यर्थः। पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्याद्भ्यः समुपादाय मृत्पिण्डमिव कुलालः पृथिव्या अमूर्छयन्मूर्छितवान्संपिण्डितवान्स्वावयवसंयोजनेनेत्यर्थः।।३।।

तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत्। अभितपनमभिध्यानं संकल्पं कृतवानित्यर्थः। "यस्य ज्ञानमयं तपः" (मु. १-१-९) इत्यादिश्रुतेः। तस्याभितप्तस्येश्वरसंकल्पेन तपसाऽभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत। यथा पक्षिणोऽण्डं निरभिद्यतैवम्।

**लोमभ्य ओषधिवनस्पतयो, हृदयं निरभिद्यत, हृद-यान्मनो, मनसश्चन्द्रमा, नाभिर्निरभिद्यत. नाभ्या अपानोऽपानान्मृत्युः, शिश्नं निरभिद्यत, शिश्नाद्रेतो रेतस आपः।।४।।**

**इत्यैतरेयोपनिषद्यात्मषट्के प्रथमः खण्डः।।१।।**

**उपनिषत्क्रमेण प्रथमाध्याये प्रथमः खण्डः।।१।।**

औषधि तथा वनस्पतियाँ उत्पन्न हुई हृदयगोलक उत्पन्न हुआ, हृदय से मन और मन से तदभिमानी चन्द्रमा उत्पन्न हुआ। नाभि उत्पन्न हुई। नाभि से अपान और अपान से मृत्यु प्रकट हुई। (तदनन्तर) शिश्न, शिश्न से शुक्र और शुक्र से उसका अधिष्ठातृदेव जल प्रादुर्भूत हुआ।।४।।

।।इति प्रथमः खण्डः।।

---

तस्मान्निर्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्तत तदधिष्ठाताऽग्निस्ततो वाचो लोकपालः। तथा नासिके निरभिद्येताम्। नासिकाभ्यां प्राणः प्राणाद्वायुरिति सर्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति। अक्षिणी कर्णौ त्वग्घृदयमन्तः-करणाधिष्ठानं मनोऽन्तःकरणं नाभिः सर्वप्राणबन्धनस्थानम्। तस्मादपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्याधिष्ठात्री देवता मृत्युः। यथाऽन्यत्र तथा शिश्नं निरभिद्यत प्रजननेन्द्रियस्थानमिन्द्रियं रेतो रेतोविसर्गार्थत्वात्सह रेतसोच्यते रेतस आप इति।।४।।

*इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्कृतावैत-रेयोपनिषद्भाष्ये प्रथमाध्याये प्रथमः खण्डः।।१।।*

(अथ द्वितीयः खण्डः)

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्। तमशनायापिपासाभ्यामन्ववार्जत्। ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति।।१।।

(इस प्रकार ईश्वर द्वारा लोकपालरूप से) रचे गये वे ये इन्द्रियाभिमानी देवगण (अविद्या, काम और कर्म, जल से परिपूर्ण संसाररूप) महासमुद्र में गिर गये। उस पिण्ड को परमेश्वर ने क्षुधा पिपासा से अभिभूत कर दिया, तब उन इन्द्रियाभिमानी देवताओं ने परमेश्वर से कहा कि हमारे लिए कोई स्थान बतलाओ जिसमें बैठकर हम अपने भोज्य वस्तु अन्न का भक्षण कर सकें।।१।।

---

ता एता अग्न्यादयो देवता लोकपालत्वेन संकल्प्य सृष्टा ईश्वरेणास्मिन्संसारार्णवे संसारसमुद्रे महत्यविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहेऽनादावनन्तेऽपारे निरालम्बे विषयेन्द्रियजनितसुखलवलक्षणविश्रामे पञ्चेन्द्रियार्थतृणमारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदयाऽहिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्यागमार्गे मोक्षतीर एतस्मिन्महत्यर्णवे प्रापतन्पतितवत्यः।

तस्मादग्न्यादिदेवताप्ययलक्षणाऽपि या गतिर्व्याख्याता ज्ञानकर्मसमुच्चयानुष्ठानफलभूता,साऽपि नालं संसारदुःखोपशमायेत्ययं विवक्षितोऽर्थोऽत्र यत एवं तस्मादेवं विदित्वा परं ब्रह्माऽऽत्माऽऽत्मनः सर्वभूतानां च यो वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थितिसंहारहेतुत्वेन सर्वसंसारदुःखोपशमनाय वेदितव्यः। तस्मात् "एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्" यदेतत्परब्रह्मात्मज्ञानम्। "नान्यः पन्था विद्यतेऽयनाय" (श्वे. ३-८) इति मन्त्रवर्णात्।

तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं पिण्डमात्मानमाशनायापिपासाभ्यामन्ववार्जदनुगमितवान्संयोजितवानित्यर्थः। तस्य कारणभूतस्याशनायादिदोषवत्त्वात्तत्कार्यभूतानामपि देवतानामशनायादिमत्त्वम्।

तास्ततोऽशनायापिपासाभ्यां पीड्यमाना एनं पितामहं स्त्रष्टारमब्रुवन्नुक्तवत्यः। आयतनमधिष्ठानं नोऽस्मभ्यं प्रजानीहि विधत्स्व। यस्मिन्नायतने प्रतिष्ठिताः समर्थाः सत्योऽन्नमदाम भक्षयाम इति।।१।।

**ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति।**
**ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति।।२।।**

**ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति पुरुषो वाव।**
**सुकृतं ता अब्रवीद्यथायतनं प्रविशतेति।।३।।**

**अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके**
**प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं**

उन देवताओं के लिए गौ के आकार वाला पिण्ड जल से निकाल कर ले आया। देवताओं ने कहा यह हमारे लिए पर्याप्त नहीं है फिर उन देवों के लिए पूर्ववत् घोड़ा लाया, फिर भी देवताओं ने कहा कि यह हामरे लिए (अन्नभक्षण के निमित्त आश्रय) पर्याप्त नहीं है।।२।।

उनके लिए अपनी उपलब्धि के योग्य पुरुष शरीर ले आया (देखते ही प्रसन्न हो) देवताओं ने कहा — यह शरीर सुन्दर बना है, निश्चय पुरुष ही सुन्दर रचना है। उन देवताओं से परमेश्वर ने कहा कि अपने-अपने आश्रयस्थानों में तुम प्रवेश कर जाओ।।३।।

(वागिन्द्रिय के अभिमानी देव) अग्नि ने वाणी होकर मुख में प्रवेश किया, वायु ने प्राण होकर नासिकाछिद्र में प्रवेश किया, सूर्य चक्षु होकर नेत्रों में प्रविष्ट हुआ, दिशाएँ श्रोत्रेन्द्रिय होकर कानों में प्रविष्ट हुईं औषधि और वनस्पतियाँ लोम होकर त्वचा

---

एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गां गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत्पिण्डं समुद्धृत्य मूर्छयित्वाऽऽनयद्दर्शितवान्। ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन्। न वै नोऽस्मदर्थमधिष्ठायान्नमत्तुमयं पिण्डोऽलं, न वै। अलं पर्याप्तोऽत्तुं न योग्य इत्यर्थः।

गवि प्रत्याख्याते ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति पूर्ववत्।।२।।

सर्वप्रत्याख्याने ताभ्यः पुरुषमानयत्स्वयोनिभूतम्। ताः स्वयोनिपुरुषं दृष्ट्वाऽखिन्नाः सत्यः सुकृतं शोभनं कृतमिदमधिष्ठानं बतेत्यब्रुवन् तस्मात्पुरुषो वाव पुरुष एव सुकृतं सर्वपुण्यकर्महेतुत्वात्। स्वयं वा स्वेनैवाऽऽत्मना स्वमायाभिः कृतत्वात्सुकृतमुच्यते। ता देवता ईश्वरोऽब्रवीदिष्टमासामिदमधिष्ठानमिति मत्वा सर्वे हि स्वयोनिषु रमन्ते। अतो यथायतनं यस्य यद्वदनादिक्रियायोग्यमायतनं तत्प्रविशतेति।।३।।

तथाऽस्त्वित्यनुज्ञां प्रतिलभ्येश्वरस्य नगर्यामिव बलाधिकृतादयोऽग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्तथोक्तार्थमन्यत्। वायुर्नासिके आदित्योऽक्षिणी

भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि
भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं
प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो
भूत्वा शिश्नं प्राविशन्।।४।।

तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति
ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ
करोमीति। तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते
भागिन्यावेवास्यामशनायापिपासे भवतः।।५।।

इत्यैतरेयोपनिषद्यात्मषट्के द्वितीयः खण्डः।।२।।

उपनिषत्क्रमेण प्रथमाध्याये द्वितीयः खण्डः।।२।।

में प्रविष्ट हुईं, चन्द्रमा मन होकर हृदय में प्रविष्ट हुआ, मृत्यु अपान होकर नाभि में प्रविष्ट हुई और जल वीर्य होकर शिश्न इन्द्रिय में प्रविष्ट हुआ।।४।।

उस ईश्वर से क्षुधा पिपासा ने (आश्रयहीन होने के कारण) कहा — हमारे लिए आश्रय का चिन्तन करो। तब परमेश्वर ने उससे कहा — तुम दोनों को मैं इन्हीं देवताओं में भागीदार बना दूँगा अतः जिस किसी देवता के लिए हवि दी जाती है उस देवता की हवि में भूख-प्यास भी भागीदार होती ही हैं (सृष्टि के आदि में ईश्वर द्वारा की गयी व्यवस्था आज भी सर्वत्र दीख पड़ती है)।।५।।

।।इति द्वितीयः खण्डः।।

---

दिशः कर्णावोषधिवनस्पतयस्त्वचं चन्द्रमा हृदयं मृत्युर्नाभिमापः शिश्नं प्राविशन्।।४।।

एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्यावशनायापिपासे तमीश्वरमब्रूतामुक्तवत्यावावाभ्यामधिष्ठानमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः। स ईश्वर एवमुक्तस्ते अशनायापिपासे अब्रवीत्। न हि युवयोर्भावरूपत्वाच्चेतनावद्वस्त्वनाश्रित्यान्नात्तृत्वं संभवति। तस्मादेतास्वेवाग्न्याद्यासु वां युवां देवतास्वध्यात्माधिदेवतास्वाभजामि वृत्तिसंविभागेनानुगृह्णामि। एतासु भागिन्यौ यद्देवत्यो यो भागो हविरादिलक्षणः स्यात्तस्यास्तेनैव भागेन भागिन्यौ भागवत्यौ वां करोमीति सृष्ट्यादावीश्वर एवं व्यदधाद्यस्मात्तस्मादिदानीमपि यस्यै कस्यै च देवताया अर्थाय हविर्गृह्यते चरुपुरोडाशादिलक्षणं भागिन्यावेव भागवत्यावेवास्यां देवतायामशनायापिपासे भवतः।।५।।

*इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्कृतावैतरेयोपनिषद्भाष्ये प्रथमाध्याये द्वितीयः खण्डः।।२।।*

अन्न सृष्टि का संकल्प

।। अथ तृतीयः खण्डः।।

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति।।१।।

अन्न की सृष्टि

सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्तिरजायतान्नं वै तत्।।२।।

भागते हुए अन्न को ग्रहण का प्रयत्न

तदेनत्सृष्टं पराङ्त्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्।।३।।

अति अजिघांसद् अति गन्तुमैच्छत्।

उस ईश्वर ने ईक्षण किया कि इन लोक और लोकपालों की (रचना तो मैंने की) अब मैं इन लोकपालों के लिये अन्न की रचना करूँ।।१।।

(अन्न की सुष्टि की इच्छा से) उस ईश्वर ने पूर्वोक्त जलों को लक्ष्य करके तप किया। उन अभितप्त जलों से ही (चराचर घनीभूत एक) मूर्ति उत्पन्न हुई यह जो मूर्ति उत्पन्न हुई, वह अन्न ही है।।२।।

(लोकपालों के निमित्त) निर्मित उस इस अन्न ने (अन्न भोक्ता को अपना मृत्यु समझकर) उनकी ओर से मुख मोड़कर भागना चाहा। तब उस आदि पुरुष ने अन्न को वाणी से ग्रहण करना चाहा, किन्तु वह उसे वदनक्रिया से ग्रहण करने में समर्थ न हो सका। यदि उस अन्न को (आदिपुरुष) वाणी से ग्रहण कर लेता तो उसके कार्यभूत (उसके परवर्ती पुरुष भी) अन्न को बोलकर ही तृप्त हो जाया करते।।३।।

---

स एवमीश्वर ईक्षत। कथमिमे नु लोकाश्च लोकपालाश्च मया सृष्टा अशनायापिपासाभ्यां च संयोजिताः। अतो नैषां स्थितिरन्नमन्तरेण, तस्मादन्नमेभ्यो लोकपालेभ्यः सृजै सृज इति। एवं हि लोक ईश्वराणामनुग्रहे निग्रहे च स्वातन्त्र्यं दृष्टं स्वेषु। तद्वन्महेश्वरस्यापि सर्वेश्वरत्वात्सर्वान्प्रति निग्रहानुग्रहे स्वातन्त्र्यमेव।।१।।

स ईश्वरोऽन्नं सिसृक्षुस्ता एव पूर्वोक्ता अप उद्दिश्याभ्यतपत्। ताभ्योऽभितप्ताभ्य उपादानभूताभ्यो मूर्तिर्घनरूपं धारणसमर्थं च चराचरलक्षणमजायतोत्पन्नमन्नं वै तन्मूर्तिरूपं या वै सा मूर्तिरजायत।।२।।

तदेनदन्नं लोकपालानामर्थेऽभिमुखे सृष्टं तद्यथा मूषकादिर्मार्जारादिगोचरे सन्मम

तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स यद्धैन-
त्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्।।४।।

तच्चक्षुषाऽजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैन-
च्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्।।५।।

तच्छ्रोत्रेणजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स
यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्।।६।।

फिर उस पुरुष ने अन्न को प्राणनक्रिया से पकड़ना चाहा, किन्तु इसे प्राण से पकड़ न सका। यदि (उस समय) इस अन्न को प्राण से पकड़ लिया होता (तो इस समय भी पुरुष) अन्न के उद्देश्य से प्राणनक्रिया करके ही तृप्त हो जाता।।४।।

उस पुरुष ने इसे नेत्र से ग्रहण करना चाहा, पर नत्रे से ग्रहण करने में वह समर्थ न हुआ। यदि (उस समय) वह अन्न को नेत्र से ग्रहण कर लिया होता तो (इस समय भी पुरुष) अन्न को देखकर ही तृप्त हो जाता।।५।।

पुरुष ने इसे श्रोत्र से पकड़ना चाहा, किन्तु वह श्रोत्र व्यापार से ग्रहण न कर सका। यदि वह इसे श्रोत्र से ग्रहण कर लिया होता तो (इस समय भी पुरुष) अन्न को कानों से सुन कर ही तृप्त हो जाता।।६।।

---

मृत्युरन्नाद इति मत्वा पराग्ञ्चतीति पराङ्सदत्तृनतीत्याजिघांसदतिगन्तुमैच्छत्पलायितुं प्रारभतेत्यर्थः। तदन्नाभिप्रायं मत्वा स लोकपालसंघातः कार्यकारणलक्षणः पिण्डः प्रथमजत्वादन्यांश्चान्नादानपश्यंस्तदन्नं वाचा वदनव्यापारेणाजिघृक्षद्ग्रहीतुमैच्छत्तदन्नं नाशक्नोन्न समर्थोऽभवद्वाचा वदनक्रियया ग्रहीतुमुपादातुम्। स प्रथमजः शरीरी यद्यदि हैनद्वाचाऽग्रहैष्यद्गृहीतवान्स्यात्सर्वोऽपि लोकस्तत्कार्यभूतत्वादन्नमभिव्याहृत्य हैवान्न-मत्रप्स्यत्तृप्तोऽभविष्यत्। न चैतदस्त्यतो नाशक्नोद्वाचा ग्रहीतुमित्यवगच्छामः पूर्वजोऽपि। समानमुत्तरम्।।३।।

तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करण-व्यापारेणान्नं ग्रहीतुमशक्नुवन्पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत्तदावयत्त-दन्नमेवं जग्राहाशितवान्। तेन स एषोऽपानवायुरन्नस्य ग्रहोऽन्नग्राहक इत्येतत्। यद्वायुर्यो

तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैनत्त्व-
चाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत्।।७।।

तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैन-
न्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्।।८।।

तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स
यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्।।९।।

तदपानेनाजिघृक्षत्तदावयत्सैषोन्नस्य ग्रहो यद्वा-
युरन्नायुर्वा एष यद्वायुः ।।१०।।

स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण
प्रपद्या इति स ईक्षत यदि वाचाऽभिव्याहृतं यदि

पुरुष ने उसे त्वचा से ग्रहण करना चाहा, किन्तु वह त्वचा से इसे ग्रहण न कर सका। यदि वह इसे त्वचा से ग्रहण कर लिया होता तो (इस समय भी पुरुष) अन्न को त्वचा से स्पर्श करके ही तृप्त हो जाता।।७।।

उस पुरुष ने अन्न को मन से ग्रहण करना चाहा किन्तु वह मन से ग्रहण न कर सका। यदि उस समय वह अन्न को मन से ग्रहण कर लेता तो (इस समय भी पुरुष) अन्न का मन से ध्यान करके ही तृप्त हो जाया करता।।८।।

उसने इस अन्न को शिश्न से ग्रहण करना चाहा किन्तु वह शिश्न से ग्रहण न कर सका। यदि वह (इस समय) इस अन्न को शिश्न से ग्रहण कर लिया होता तो (इस समय भी पुरुष) अन्न का विसर्ग करके ही तृप्त हो जाता।।९।।

(इसी प्रकार उसने) इसे अपान से ग्रहण करना चाहा और अन्न को ग्रहण कर भी लिया। वह यह (अपान वायु) ही अन्न ग्रहण करने वाला है। जो वायु अन्न द्वारा जीवनवाला प्रसिद्ध है, वह अपान वायु ही है।।१०।।

उस परमेश्वर ने विचार किया यह (लोक, लोकपालों के संघातरूप पिण्ड) मेरे

---

वायुरन्नायुरन्नबन्धनोऽन्नजीवनो वै प्रसिद्धं स एष यो वायुः ।।४-१०।।

स एवं लोकलोकपालसंघातस्थितिमन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृस्थिति-

**प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपाने-नाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽह-मिति।।११।।**

बिना कैसे रह सकेगा? उसने विचार किया मैं किस मार्ग से इस शरीर में प्रवेश करूँ। उसने पुनः विचारा (मेरे बिना भी) यदि वाणी से बोल लिया जाय, यदि प्राण से प्राणन किया जाय, यदि त्वचा से स्पर्श कर लिया जाय, यदि मन से ध्यान कर लिया जाय, यदि अपान से खा लिया जाय और यदि शिश्न से विसर्जन कर लिया जाय तो फिर मैं कौन रह गया (अर्थात् मेरे बिना उक्त सभी व्यापार हो जाने पर मेरा कोई प्रयोजन नहीं रह जाता। किन्तु राजा के बिना जैसे नगर का कार्य नहीं होता, वैसे ही मेरी प्रेरणा के बिना उक्त व्यापार का होना असंभव है)।।११।।

---

समां स्वामीवेक्षत। कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनम्। यदिदं कार्यकरणसंघातकार्यं वक्ष्यमाणं कथं नु खलु मामन्तरेण स्यात्परार्थं सत्। यदि वाचाऽभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि, तन्निरर्थकं न कथंचन भवेद्बलिस्तुत्यास्यादिवत्। पौरबन्द्यादिभिः प्रयुज्यमानं स्वाम्यर्थं सत्तत्स्वामिनमन्तरेणासत्येव स्वामिनि तद्वत्। तस्मान्मया परेण स्वामिनाऽधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा। यदि नामैतत्संहतकार्यस्य परार्थत्वं परमाऽर्थिनं मां चेतनमन्तरेण भवेत्पुरपौरकार्यमिव तत्स्वामिनम्। अथ कोऽहं किंस्वरूपः कस्य वा स्वामी। यद्यहं कार्यकरणसंघातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेय राजेव पुरमा-विश्याधिकृतपुरुषकृताकृतावेक्षणम्, न कश्चिन्मामयं सन्नेवंरूपश्चेत्यधिगच्छेद्विचारयेत्। विपर्यये तु योऽयं वागाद्यभिव्याहृतादीदमिति वेद स सन्वेदनरूपश्चेत्यधिगन्तव्योऽहं स्याम्। यदर्थमिदं संहतानां वागादीनामभिव्याहृतादि। यथा स्तम्भकुड्यादीनां प्रासादादीनां च संहतानां स्वावयवैरसंहतपरार्थत्वं तद्वदिति। एवमीक्षित्वाऽतः कतरेण प्रपद्या इति। प्रपदं च मूर्धा चास्य संघातस्य प्रवेशमार्गावनयोः कतरेण मार्गेणेदं कार्यकरणसंघातलक्षणं पुरं प्रपद्यै प्रपद्येयमिति (द्येयेति)।।११।।

⊕ Next page Refer.

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत। सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम्। तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति।।१२।।**

**स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिष-**

वह सृष्टिकर्ता ईश्वर इस मूर्धा को विदीर्ण कर इस मार्ग से ही संघात में प्रविष्ट हो गया। वह यह द्वार विदृति नाम से प्रसिद्ध है वह आनन्दप्रद है। उसके तीन वासस्थान हैं और तीन ही स्वप्न हैं। (जाग्रत् में) यही नेत्रस्थान वाला है, स्वप्न में यह कण्ठस्थान वाला है और सुषुप्ति में यह हृदयस्थान वाला है।।१२।।

(जीवभाव से इस शरीर में प्रविष्ट होकर) उत्पन्न हुए उस परमेश्वर ने भूतों

---

एवमीक्षित्वा न तावन्मद्भृत्यस्य प्राणस्य मम सर्वार्थाधिकृतस्य प्रवेशमार्गेण प्रपदाभ्यामधः प्रपद्ये। किं तर्हि पारिशेष्यादस्य मूर्धानं विदार्य प्रपद्येयमिति लोक इवेक्षितकारी स स्रष्टेश्वर एतमेव मूर्धसीमानं केशविभागावसानं विदार्य च्छिद्रं कृत्वैतया द्वारा मार्गेणेमं कार्यकरणसंघातं प्रापद्यत प्रविवेश।

सेयं हि प्रसिद्धा द्वाः। मूर्ध्नि तैलादिधारणकाले तद्रसादिसंवेदनात्। सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः। इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नाऽऽनन्दहेतूनि। इदं तु द्वारं परमेश्वरस्यैव केवलस्येति। तदेतन्नान्दनं नन्दनमेव नान्दनमिति दैर्घ्यं छान्दसम्। नन्दत्यनेन द्वारेण गत्वा परस्मिन्ब्रह्मणीति।

तस्यैवं सृष्ट्वा प्रविष्टस्य जीवेनाऽऽत्मना राज्ञ इव पुरं त्रय आवस्थाः। जागरितकाल इन्द्रियस्थानं दक्षिणं चक्षुः। स्वप्नकालेऽन्तर्मनः। सुषुप्तिकाले हृदयाकाश इत्येतद्वक्ष्यमाणा वा त्रय आवसथाः। पितृशरीरं मातृगर्भाशयः स्वं च शरीरमिति। त्रयः स्वप्ना जाग्रत्स्वप्नसुषुप्त्याख्याः। ननु जागरितं प्रबोधरूपत्वान्न स्वप्नः। नैवम्। स्वप्न एव। कथं परमार्थस्वात्मप्रबोधाभावात्स्वप्नवदसद्वस्तुदर्शनाच्च। अयमेवाऽऽवसथश्चक्षुर्दक्षिणं प्रथमः। मनोऽन्तरं द्वितीयः। हृदयाकाशस्तृतीयः। अयमावसथ इत्युक्तानुकीर्तनमेव तेषु ह्ययमावसथेषु पर्यायेणाऽऽत्मभावेन वर्तमानोऽविद्यया दीर्घकालं गाढं प्रसुप्तः स्वाभाविक्या न प्रबुध्यतेऽनेकशतसहस्रानर्थसंनिपातजदुःखमुद्गराभिघातानुभवैरपि।।१२।।

स जातः शरीरे प्रविष्टो जीवात्मना भूतान्यभिव्यैख्यद्व्याकरोत्।

परमात्म से, गुरु कृपा से शास्त्र कृपा
ततमम्



दिति। स एवमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्श- गुरुकृपा से
मितीश्ङ३ ॥१३॥

इन्द्र शब्द की उत्पत्ति

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः॥१४॥

इत्यैतरेयोपनिषद्यात्मषट्के तृतीयः खण्डः॥३॥
उपनिषत्क्रमेण प्रथमाध्याये तृतीयः खण्डः॥३॥
इत्यैतरेयोपनिषदि प्रथमोऽध्यायः॥१॥

को (तादात्म्य-रूप से) ग्रहण किया और (गुरुकृपा से बोध होने पर मुझसे भिन्न) यहाँ दूसरा कौन है, ऐसा कहा और मैंने इस आत्मदेव को देख लिया है। इस प्रकार उसने इस पुरुष को ही पूर्ण ब्रह्मरूप से देखा॥१३॥

इसीलिए उस परमेश्वर का "इदन्द्र" नाम पड़ा, लोक में ईश्वर "इदन्द्र" नाम से प्रसिद्ध है। इदन्द्र होते हुए भी उसे ब्रह्मवेत्ता पुरुष परोक्ष रूप से इन्द्र कहकर पुकारते हैं क्योंकि देवता लोग परोक्षप्रिय होते हैं (द्विरुक्ति अध्याय समाप्ति सूचक के लिए है) ॥१४॥

॥इति प्रथमाध्यायः, तृतीयखण्डः॥

इति श्रीमत्परमहंसपरिव्रजकाचार्ययतीन्द्रकुलतिलककैलासपीठाधीश्वरपरामदर्शमहामण्डलेश्वरस्वामिविद्यानन्दगिरि-विरचिताऐतरेयोपनिषद्प्रथमाध्यायस्य विद्यानन्दीमिताक्षरा ॥१॥

---

स कदाचित्परमकारुणिकेनाऽऽचार्येणाऽऽत्मज्ञानप्रबोधकृच्छब्दिकायां वेदान्तमहाभेर्यां तत्कर्णमूले ताड्यमानायामेतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरि शयान-मात्मानं ब्रह्म बृहत्ततमं तकारेणैकेन लुप्तेन ततमं व्याप्ततमं परिपूर्णमाकाशवत्प्रत्य-बुध्यतापश्यत्। कथम्। इदं ब्रह्म ममाऽऽत्मनः स्वरूपमदर्शं दृष्टवानस्मि। अहो इति विचारणार्था प्लुतिः॥१३॥

यस्मादिदमित्येवं यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तरमपश्यदपरोक्षेण। तस्मादिदं पश्यतीतीदन्द्रो नाम परमात्मा। इदन्द्रो ह वै नाम प्रसिद्धो लोके ईश्वरः। तमेवमिदन्द्रं सन्तमिन्द्र इति परोक्षेण परोक्षाभिधानेनाऽऽचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यत-मत्वात्प्रत्यक्षनामग्रहणभयात्।

तथा हि परोक्षप्रियाः परोक्षनामग्रहणप्रिया इव ह्येव हि यस्माद्देवाः। किमु सर्वदेवानामपि देवो महेश्वरः। द्विर्वचनं प्रकृताध्यायपरिसमाप्त्यर्थम्॥१४॥

इत्यैतरेयोपनिषद्भाष्ये प्रथमाध्याये तृतीयः खण्डः॥३॥

*इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्कृतावैतरे-योपनिषद्भाष्ये प्रथमोऽध्यायः॥१॥*

✦ प्रथममाह्निकम् ✦

(+) (a) सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्।
(इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः)
(b) एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत्। इति.

रहूगण राजा को जडभरत ने कहा अवधूत दत्तात्रेय के दर्शन के आते समय॥

## अथ द्वितीयोऽध्यायः।

(आरण्यकक्रमेण पञ्चमोऽध्यायः)

### तत्र प्रथमः खण्डः

अस्मिंश्चतुर्थेऽध्याय एष वाक्यार्थो जगदुत्पत्तिस्थितिप्रलयकृदसंसारी सर्वज्ञः सर्वशक्तिः सर्ववित्सर्वमिदं जगत्स्वतोऽन्यद्वस्त्वन्तरमनुपादायैवाऽऽकाशादिक्रमेण सृष्ट्वा स्वात्मबोधार्थं सर्वाणि च प्राणादिमच्छरीराणि स्वयं प्रविवेश प्रविश्य च स्वमात्मानं यथाभूतमिदं ब्रह्मास्मीति साक्षात्प्रत्यबुध्यत। तस्मात्स एव सर्वशरीरेष्वेक एवाऽऽत्मा नान्य इति। अन्योऽपि "सम आत्मा" "ब्रह्मास्मि" इत्येवं विद्यात्"इति (बृ. १-४-१०) 'आत्मा वा इदमेक एवाग्र आसीत्'इति ब्रह्म ततममिति चोक्तम्। अन्यत्र च सर्वगतस्य सर्वात्मनो बालाग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य प्रापद्यत पिपीलिकेव सुषिरम्।

नन्वत्यल्पमिदं चोद्यं बहु चात्र चोदितव्यम्। अकरणः सन्नीक्षिताऽनुपादाय किंचिल्लोकानसृजताद्भ्यः पुरुषं समुद्धृत्यामूर्छयत्। तस्याभिध्यानान्मुखादि निर्भिन्नं मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषां चाशनायापिपासादिसंयोजनं तदायतनप्रार्थनं तदर्थं गवादिप्रदर्शनं तेषां यथायतनप्रवेशनं सृष्टस्यान्नस्य पलायनं वागादिभिस्तज्जिघृक्षा। एतत्सर्वं सीमाविदारणप्रवेशसममेव। अस्तु तर्हि सर्वमेवेदमनुपपन्नम्। न। अत्राऽऽत्मावबोधार्थमात्रस्य विवक्षित्वात्सर्वोऽयमर्थवाद इत्यदोषः। मायाविवद्वा महामायावी देवः सर्वज्ञः सर्वशक्तिः सर्वमेतच्चकार सुखावबोधनप्रतिपत्त्यर्थं लोकवदाख्यायिकादिप्रपञ्च इति युक्ततरः पक्षः। न हि सृष्ट्याख्यायिकादिपरिज्ञानात्किंचित्फलमिष्यते। ऐकात्म्यस्वरूपपरिज्ञानात्त्वमृतत्वं फलं सर्वोपनिषत्प्रसिद्धम्। स्मृतिषु च गीताद्यासु "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' (गी. १३-२७) इत्यादिना।

ननु त्रय आत्मानो भोक्ता कर्ता संसारी जीव एकः सर्वलोकशास्त्रप्रसिद्धः। अनेकप्राणिकर्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्माणेन लिङ्गेन यथाशास्त्रप्रदर्शितेन पुरप्रासादादिनिर्माणलिङ्गेन तद्विषयकौशलज्ञानवांस्तत्कर्ता तक्षादिरिवेश्वरः सर्वज्ञो जगतः कर्ता, द्वितीयश्चेतन आत्माऽवगम्यते। "यतो वाचो निवर्तन्ते" (तै. २-९) 'नेति नेति' (बृ. ३-९-२६) इत्यादिशास्त्रप्रसिद्ध औपनिषदः पुरुषस्तृतीयः। एवमेते त्रय आत्मानोऽन्योन्यविलक्षणाः। तत्र कथमेक एवाऽऽत्माऽद्वितीयोऽसंसारीति ज्ञातुं शक्यते। तत्र जीव एव तावत्कथं ज्ञायते। नन्वेवं ज्ञायते श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञातेति।

ननु विप्रतिषिद्धं ज्ञायते यः श्रवणादिकर्तृत्वेनामतोऽविज्ञात इति च। तथा "न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः" (बृ. ३-४-२) इत्यादि च। सत्यं विप्रतिषिद्धं यदि प्रत्यक्षेण ज्ञायेत सुखादिवत्। प्रत्यक्षज्ञानं च निवार्यते "न मतेर्मन्तारम्" इत्यादिना। ज्ञायते तु श्रवणादिलिङ्गेन तत्र कुतो विप्रतिषेधः।

ननु श्रवणादिलिङ्गेनापि कथं ज्ञायते, यावता यदा शृणोत्यात्मा श्रोतव्यं शब्दं तदा तस्य श्रवणक्रिययैव वर्तमानत्वान्मननविज्ञानक्रिये न संभवत आत्मनि परत्र वा। तथाऽन्यत्रापि मननादिक्रियासु श्रवणादिक्रियाश्च स्वविषयेष्वेव। न हि मन्तव्यादन्यत्र मन्तुर्मननक्रिया संभवति।

कारक हेतुः = घटं प्रति दण्डः
ज्ञापक हेतुः = वह्निं प्रति धूमः

ननु मनसा सर्वमेव मन्तव्यम्। सत्यमेवं तथाऽपि सर्वमपि मन्तव्यं मन्तारमन्तरेण न मन्तुं शक्यम्। यद्येवं किं स्यादिदमत्र स्यात्। सर्वस्य यो मन्ता स मन्तैवेति न स मन्तव्यः स्यात्। न च द्वितीयो मन्तुर्मन्ताऽस्ति, यदा स आत्मनैव मन्तव्यस्तदा येन च मन्तव्य आत्माऽऽत्मना यश्च मन्तव्य आत्मा तौ द्वौ प्रसज्येयाताम्। एक एवाऽऽत्मा द्विधा मन्तृमन्तव्यत्वेन द्विशकलीभवेद्वंशादिवदुभयथाऽप्यनुपपत्तिरेव। यथा प्रदीपयोः प्रकाश्यप्रकाशकत्वानुपपत्तिः समत्वात्तद्वत्। न च मन्तुर्मन्तव्ये मननव्यापारशून्यः कालोऽस्त्यात्ममननाय। यदाऽपि लिङ्गेनाऽऽत्मानं मनुते मन्ता, तदाऽपि पूर्ववदेव लिङ्गेन मन्तव्य आत्मा यश्च तस्य मन्ता तौ द्वौ प्रसज्येयाताम्। एक एव वा द्विधेति पूर्वोक्तो दोषः। न प्रत्यक्षेण नाप्यनुमानेन ज्ञायते चेत्कथमुच्यते 'सम आत्मेति विद्यात्' (ऐ. आ. ३-२-४) इति। कथं वा "श्रोता मन्ता" (ऐ. आ. ३-२-४) इत्यादि।

ननु श्रोतृत्वादिधर्मवानात्माऽश्रोतृत्वादि च प्रसिद्धमात्मनः किमत्र विषमं पश्यसि। यद्यपि तव न विषमं तथाऽपि मम तु विषमं प्रतिभाति। कथम्। यदाऽसौ श्रोता तदा न मन्ता यदा च मन्ता तदा न श्रोता। तत्रैवं सति पक्षे श्रोता मन्ता पक्षे न श्रोता नापि मन्ता। तथाऽन्यत्रापि च। यदैवं तदा श्रोतृत्वादिधर्मवानात्माऽश्रोतृत्वादिधर्मवान्वेति संशयस्थाने कथं तव न वैषम्यम्। यदा देवदत्तो गच्छति तदा न स्थाता गन्तैव। यदा तिष्ठति तदा न गन्ता स्थातैव तदाऽस्य पक्ष एव गन्तृत्वं स्थातृत्वं च न नित्यं गन्तृत्वं स्थातृत्वं वा तद्वत्।

अत्र काणादादयः पश्यन्ति। पक्षप्राप्तेनैव श्रोतृत्वादिनाऽऽत्मोच्यते श्रोता मन्तेत्यादि, संयोगजत्वमयौगपद्यं च ज्ञानस्य ह्याचक्षते। दर्शयन्ति च "अन्यत्रमना अभूवं नादर्शम्'

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः
अज्ञान भाव पदार्थ यथा तमः आवरण भाव पदार्थ से होता है।

(बृ. १-५-३) इत्यादि, "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (न्या. सू. १-१-१६) इति च न्याय्यम्। भवत्वेवं किं तव नेष्टम्। यद्येवं स्यादस्त्वेवं तवेष्टं चेत्। श्रुत्यर्थस्तु न संभवति किं न श्रोता मन्तेत्यादिश्रुत्यर्थः। न। "न श्रोता न मन्ता"इत्यादिवचनात्।

ननु पाक्षिकत्वेन प्रत्युक्तं त्वया। न, नित्यमेव श्रोतृत्वाद्यभ्युपगमात्। "न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते" (बृ. ४-३-२७) इत्यादिश्रुतेः। एवं तर्हि नित्यमेव श्रोतृत्वाद्यभ्युपगमे प्रत्यक्षविरुद्धा युगपज्ज्ञानोत्पत्तिरज्ञानाभावश्चाऽऽत्मनः कल्पितः स्यात्। तच्चानिष्टमिति। नोभयदोषोपपत्तिरात्मनः श्रुत्यादिश्रोतृत्वादिधर्मवत्त्वश्रुतेः। अनित्यानां मूर्तानां च चक्षुरादीनां दृष्ट्याद्यनित्यमेव संयोगवियोगधर्मिणाम्। यथाऽग्नेर्ज्वलनं तृणादिसंयोगजत्वात्तद्वत्।

न तु नित्यस्यामूर्तस्यासंयोगविभागधर्मिणः संयोगजदृष्ट्याद्यनित्यधर्मवत्त्वं संभवति। तथा च श्रुतिः- "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (बृ. ४-३-२३) इत्याद्या। एवं तर्हि द्वे दृष्टी चक्षुषोऽनित्या दृष्टिर्नित्या चाऽऽत्मनः। तथा च द्वे श्रुती श्रोत्रस्यानित्या नित्याऽऽत्मस्वरूपस्य। तथा द्वे मती विज्ञाती बाह्याबाह्ये। एवं ह्येव तथा चेयं श्रुतिरुपपन्ना भवति दृष्टेर्द्रष्टा श्रुतेः श्रोतेत्याद्या। लोकेऽपि प्रसिद्धं चक्षुषस्तिमिरागमापाययोर्नष्टा दृष्टिर्जाता दृष्टिरिति चक्षुर्दृष्टेरनित्यत्वम्। तथा च श्रुतिमत्यादीनामात्मदृष्ट्यादीनां च नित्यत्वं प्रसिद्धमेव लोके वदति ह्युद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति। तथाऽवगतबाधिर्यः स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि।

यदि चक्षुःसंयोगजैवाऽऽत्मनोऽनित्या दृष्टिस्तन्नाशे नश्येत्तदोद्धृतचक्षुः स्वप्ने नीलपीतादि न पश्येत् "न हि द्रष्टुर्दृष्टेः" इत्याद्या च श्रुतिरनुपपन्ना स्यात्। तच्चक्षुः पुरुषे येन स्वप्ने पश्यतीत्याद्या च श्रुतिरनुपपन्ना स्यात् ।

नित्यात्मनो दृष्टिर्बाह्यानित्यदृष्टेर्ग्राहिका। बाह्यादृष्टेश्चोपजनापायाद्यनित्यधर्मवत्त्वात्तद्ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वमनित्यत्वादिभ्रान्तिनिमित्तं लोकस्येति युक्तम्। यथा भ्रमणादिधर्मवदलातादिवस्तुविषयदृष्टिरपि भ्रमतीव तद्वत्। तथा च श्रुतिः-"ध्यायतीव लेलायतीव" (बृ. ४-३-७) इति। तस्मादात्मदृष्टेर्नित्यत्वान्न यौगपद्यमयौगपद्यं वाऽस्ति।

बाह्यानित्यदृष्ट्युपाधिवशात्तु लोकस्य तार्किकाणां चाऽऽगमसंप्रदायवर्जितत्वादनित्याऽऽत्मनो दृष्टिरिति भ्रान्तिरुपपन्नैव। जीवेश्वरपरमात्मभेदकल्पना चैतन्निमित्तैव।

तथाऽस्ति नास्तीत्याद्याश्च यावन्तो वाङ्मनसयोर्भेदा यत्रैकं भवन्ति तद्विषयाया नित्याया दृष्टेर्निर्विशेषायाः।

अस्ति नास्तीत्येकं नानागुणवदगुणं जानाति न जानाति क्रियावदक्रियं फलवदफलं सबीजं निर्बीजं सुखं दुःखं मध्यममध्यं शून्यमशून्यं परोऽहमन्य इति वा सर्ववाक्प्रत्ययागोचरे स्वरूपे यो विकल्पयितुमिच्छति स नूनं खमपि चर्मवद्वेष्टयितुमिच्छति सोपानमिव च पद्भ्यामारोढुम्। जले खे च मीनानां वयसां च पदं दिदृक्षते। "नेति नेति" "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिभ्यः। "को अद्धा वेद" (ऋ. वे. १०-१२९-६) इत्यादिमन्त्रवर्णात्।

कथं तर्हि तस्य सम आत्मेति वेदनं ब्रूहि केन प्रकारेण तमहं सम आत्मेति विद्याम्। अत्राऽऽख्यायिकामाचक्षते। कश्चित्किल मनुष्यो मुग्धः कैश्चिदुक्तः कस्मिंश्चिदपराधे सति धिक्त्वा नासि मनुष्य इति। स मुग्धतयाऽऽत्मनो मनुष्यत्वं प्रत्याययितुं कंचिदुपेत्याऽऽह। ब्रवीतु भवान्कोऽहमस्मीति। स तस्य मुग्धतां ज्ञात्वाऽऽह। क्रमेण बोधयिष्यामीति। स्थावराद्यात्मभावमपोह्य न त्वममनुष्य इत्युक्त्वोपरराम। स तं मुग्धः प्रत्याह। भवान्मां बोधयितुं प्रवृत्तस्तूष्णीं बभूव किं न बोधयतीति। तादृगेव तद्भवतो वचनम्। नास्यमनुष्य इत्युक्तेऽपि मनुष्यत्वमात्मनो न प्रतिपद्यते यः स कथं मनुष्योऽसीत्युक्तोऽपि मनुष्यत्वमात्मनः प्रतिपद्येत।

तस्माद्यथाशास्त्रोपदेश एवाऽऽत्मावबोधविधिर्नान्यः। न ह्यग्नेर्दाह्यं तृणाद्यन्येन केनचिद्दग्धुं शक्यम्। अत एव शास्त्रमात्मस्वरूपं बोधयितुं प्रवृत्तं सदमनुष्यत्वप्रतिषेधेनेव 'नेति नेति' इत्युक्त्वोपरराम। तथा "अनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्" (बृ. २-५-१९)। "तत्त्वमसि" (छा. ६-८-७) "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" (बृ. ४-५-१५) इत्येवमाद्यपि च।

यावदयमेवं यथोक्तमिममात्मानं न वेत्ति तावदयं बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्याविद्ययोपाधिधर्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्यन्तेषु देवतिर्यङ्नरस्थानेषु पुनः पुनरावर्तमानोऽविद्याकामकर्मवशात्संसरति।

"आत्मा वै जायते पुत्रः" पहला पुत्र जन्म के बाद भार्या को माता समझें- नहीं तो मातृगामी पशु माना जायेगा - भोले बाबा।



पुरुष का प्रथम जन्म।

(अपक्रामन्तु गर्भिण्यः)

**ॐ पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः। तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म।।१।।**

सबसे पहले यह (संसारी जीव रसादि क्रम से शुक्ररूप से) पुरुषशरीर के भीतर ही गर्भरूप में होता है। यह जो प्रसिद्ध वीर्य है, वह पुरुष के सम्पूर्ण अवयवों से उत्पन्न हुआ सारभूत तेज है। वह पुरुष इस अपने आत्मरूप तेज को अपने शरीर में ही पोषण करता है, फिर जिस समय वह पुरुष अपने गर्भरूप से उत्पन्न शुक्र को स्त्री में सींचता है, तब इसे वह उत्पन्न करता है (इस प्रकार रेतः सिञ्चन समय शुक्र रूप से अपने स्थान से निकलना ही) इस संसारी पुरुष का पहला जन्म है।।१।।

---

स एवं संसरन्नुपात्तदेहेन्द्रियसंघातं त्यजति। त्यक्त्वाऽन्यमुपादत्ते। पुनः पुनरेवमेव ✓नदीस्रोतोवज्जन्ममरणप्रबन्धाविच्छेदेन वर्तमानः काभिरवस्थाभिर्वर्तत इत्येतमर्थं दर्शयन्त्याह ✓श्रुतिर्वैराग्यहेतोः :—

अयमेवाविद्याकामकर्माभिमानवान्यज्ञादिकर्म कृत्वाऽस्माल्लोकाद्धूमादिक्रमेण चन्द्रमसं प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्यान्नभूतः पुरुषाग्नौ हुतः। तस्मिन्पुरुषे ह वा अयं संसारी रसादिक्रमेणाऽऽदितः प्रथमतो रेतोरूपेण गर्भो भवतीत्येतदाह। यदेतत्पुरुषे रेतस्तेन रूपेणेति।

तच्चैतद्रेतोऽन्नमयस्य पिण्डस्य सर्वेभ्योऽङ्गेभ्योऽवयवेभ्यो रसादिलक्षणेभ्यस्तेजः साररूपं शरीरस्य संभूतं परिनिष्पन्नं तत्पुरुषस्याऽऽत्मभूतत्वादात्मा। तमात्मानं ✓रेतोरूपेण गर्भीभूतमात्मन्येव स्वशरीर एवाऽऽत्मानं बिभर्ति धारयति। तद्रेतो यदा ✓यस्मिन्काले भार्यर्तुमती तस्यां योषाग्नौ स्त्रियां सिञ्चत्युपगच्छन्। अथ तदैनदेतद्रेत ✓आत्मनो गर्भभूतं जनयति पिता। तदस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतोरूपेणास्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः, तदेतदुक्तं पुरस्ताद् - 'असावात्माऽमुमात्मानम्' (ऐ. आ. २-३-७) इत्यादिना।।१।।

तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति सा³ऽस्यैतमात्मानमत्र गतं भावयति।।२।। पुरूष का दूसरा जन्म

सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेवैतद्भावयत्येषां लोकानां संतत्या एवं संतता हीमे लोकास्तदस्य द्वितीयं जन्म।।३।।

जिस प्रकार अपने अङ्ग स्तनादि होते हैं उसी प्रकार यह वीर्य भी स्त्री के आत्मभाव को प्राप्त हो जाता है। इसीलिए वह गर्भ उसे कष्ट नहीं पहुँचाता। वह गर्भिणी अपने उदर में प्रविष्ट हुए उस पति के इस आत्मा का (अनुकूल भोजनादि के द्वारा) पोषण करती है।।२।।

(गर्भरूप पति के आत्मा का) पालन करने वाली वह गर्भिणी स्त्री अपने स्वामी द्वारा पालनीया होती है। प्रसव होने से पूर्व गर्भिणी स्त्री उस गर्भ का पोषण करती है, तब वह पिता गर्भरूप से उत्पन्न हुए प्रसव के अनन्तर सद्योजात उस कुमार को जातकर्मादि से संस्कृत करता है। जन्म के बाद वह जो कुमार का संस्कार करता है, वह इस प्रकार पुत्र-पौत्रादि लोकों के विस्तार से अपना ही संस्कार करता है, क्योंकि इस प्रकार (पुत्रोत्पादनादि परम्परा के चलते रहने से) इन लोकों की वृद्धि होती है। यही इस संसारी पुरुष का द्वितीय जन्म है।।३।।

---

तद्रेतो यस्यां स्त्रियां सिक्तं तस्या आत्मभूयमात्माव्यतिरेकतां यथा पितुरेवं गच्छति प्राप्नोति यथा स्वमङ्गं स्तनादि तथा तद्वदेव। तस्माद्धेतोरेनां मातरं स गर्भो न हिनस्ति, पिटकादिवत्। यस्मात्स्तनादिस्वाङ्गवदात्मभूयं गतं तस्मान्न हिनस्ति न बाधते इत्यर्थः। साऽन्तर्वत्न्येतमस्य भर्तुरात्मानमत्राऽऽत्मने उदरे गतं प्रविष्टं बुद्ध्वा भावयति वर्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारमनुकूलाशनाद्युपयोगं च कुर्वती।।२।।

सा भावयित्री वर्धयित्री भर्तुरात्मनो गर्भभूतस्य भावयितव्या रक्षयितव्या च भर्त्रा भवति। न ह्युपकारप्रत्युपकारमन्तरेण लोके कस्यचित्केनचित्संबन्ध उपपद्यते। तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्ति धारयत्यग्रे प्राग्जन्मनः। स पिताऽग्रे

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म।।४।।**

इस पिता का वह पुत्ररूप आत्मा शास्त्रोक्त पुण्यकर्मों के संपादन के लिये (घर में पिता के स्थान पर) प्रतिनिधिरूप से स्थापित किया जाता है। तदनन्तर इस पुत्र का अन्य पितारूप आत्मा वृद्ध हो जाने पर कृतकृत्य होकर यहाँ से प्रस्थान करने के बाद वह (कर्मफल भोग के लिये) फिर जन्मधारण करता है, यही इसका तीसरा जन्म है।।४।।

---

एव पूर्वमेव जातमात्रं जन्मनोऽध्यूर्ध्वं जन्मनो जातं कुमारं जातकर्मादिना पिता भावयति।

स पिता यद्यस्मात्कुमारं जन्मनोऽध्यूर्ध्वमग्रे जातमात्रमेव जातकर्मादिना यद्भावयति तदात्मानमेव भावयति पितुरात्मैव हि पुत्ररूपेण जायते। तथा ह्युक्तं "पतिर्जायां प्रविशति"इत्यादि। तत्किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयतीति। उच्यते—एषां लोकानां संतत्या अविच्छेदायेत्यर्थः। विच्छिद्येरन्हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्युः केचन। एवं पुत्रोत्पादनादिकर्माविच्छेदेनैव संतताः प्रबन्धरूपेण वर्तन्ते हि यस्मादिमे लोकास्तस्मात्तदविच्छेदाय तत्कर्तव्यं न मोक्षायेत्यर्थः। तदस्य संसारिणः कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्रेतोरूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः।।३।।

अस्य पितुः सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्मनिष्पादनार्थं प्रतिधीयते पितुः स्थाने पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधीयत इत्यर्थः। तथा च संप्रत्तिविद्यायां वाजसनेयके — पित्राऽनुशिष्टः'अहं ब्रह्माहं यज्ञः' (बृ. १-५-१७) इत्यादि प्रतिपद्यत इति।

अथानन्तरं पुत्रे निवेश्याऽऽत्मनो भारमस्य पुत्रस्येतरोऽयं यः पित्रात्मा कृतकृत्यः कर्तव्यादृणत्रयाद्विमुक्तः कृतकर्तव्य इत्यर्थः। वयोगतो गतवया जीर्णः सन्प्रैति म्रियते। स इतोऽस्मात्प्रयन्नेव शरीरं परित्यजन्नेव तृणजलूकावद्देहान्तरमुपाददानः कर्मचितं पुनर्जायते। तदस्य मृत्वा प्रतिपत्तव्यं यत्तत्तृतीयं जन्म। ननु संसरतः पितुः सकाशाद्रेतोरूपेण प्रथमं जन्म। तस्यैव कुमाररूपेण मातुर्द्वितीयं जन्मोक्तम्। तस्यैव तृतीये जन्मनि वक्तव्ये प्रयतः पितुर्यज्जन्म तत्तृतीयमिति कथमुच्यते। नैष दोषः। पितापुत्रयोरैकात्म्यस्य

**तदुक्तमृषिणा — गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच।।५।।**

**स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मि-**

यही बात मन्त्र में कही गयी है। माता के गर्भ में रहते हुए ही मैंने इस (वाक् एवं अग्नि आदि) देवताओं के सम्पूर्ण जन्मों को जान लिया है। (संसार बन्धन से मुक्त होने से पूर्व) मुझे लोहमय अभेध्य सैकड़ों शरीरों ने अवरुद्ध किया था। अब (तत्त्वज्ञान के प्रभाव से) मैं बाजपक्षी के समान (इस जाल को काट कर) बाहर निकल आया हूँ। वामदेव ऋषि ने गर्भ में सोते हुए ही ऐसा कहा था।।५।।

वह (वामदेव ऋषि पूर्वोक्त आत्मा को) इस प्रकार जानकर इस शरीर के नाश होने के बाद उत्क्रमण कर इन्द्रियों के अविषय स्वयंप्रकाश आत्मलोक में सम्पूर्ण भोगों

---

विवक्षितत्वात्। सोऽपि पुत्रः स्वपुत्रे भारं निधायेतः प्रयन्नेव पुनर्जायते यथा पिता। तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः। पितापुत्रयोरेकात्मत्वात्।।४।।

एवं संसरन्नवस्थाभिव्यक्तित्रयेण जन्ममरणप्रबन्धारूढः सर्वो लोकः संसारसमुद्रे निपतितः कथंचिद्यथाश्रुत्युक्तमात्मानं विजानाति यस्यां कस्यांचिदवस्थायां तदेव मुक्तसर्वसंसारबन्धनः कृतकृत्यो भवतीत्येतद्वस्तु तदृषिणा मन्त्रेणाप्युक्तमित्याह—गर्भे नु मातुर्गर्भाशय एव सन्वसन्। न्विति वितर्के। अनेकजन्मान्तर भावनापरिपाकवशादेषां देवानां वागग्न्यादीनां जनिमानि जन्मानि विश्वा विश्वानि सर्वाण्यन्ववेदमहमहो अनुबुद्धवानस्मीत्यर्थः। शतमनेकं बह्व्यो मा मां पुर आयसीरायस्यो लोहमय्य इवाभेद्यानि शरीराणीत्यभिप्रायः। अरक्षन्रक्षितवत्यः संसारपाशनिर्गमनादधोऽधः श्येनइव जालं भित्वा जवसाऽऽत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि। अहो गर्भ एव शयानो वामदेव ऋषिरेवमुवाचैतत्।।५।।

स वामदेव ऋषिर्यथोक्तमात्मानमेवं विद्वानस्माच्छरीरभेदाच्छरीरस्याविद्यापरिकल्पित-स्याऽऽयसवदनिर्भेद्यस्य जननमरणाद्यनेकानर्थशताविष्टशरीरप्रबन्धस्य (प्रवाहस्य) परमात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदाच्छरीरोत्पत्तिबीजाविद्यादिनिमित्तोपमर्दहेतोः शरीरविनाशादित्यर्थः। ऊर्ध्वः परमात्मभूतः सन्नधोभवात्संसारादुत्क्रम्य ज्ञानावद्योतितामल-

स्वस्मिन्नात्मनि

न्त्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्सम-
भवत्।।६।।

(यथास्थानं गर्भिण्यः)

इत्यैतरेयोपनिषद्यात्मषट्के चतुर्थः खण्डः।।४।।

उपनिषत्क्रमेण द्वितीयाध्याये प्रथमः खण्डः।।१।।

इत्यैतरेयोपनिषदि द्वितीयोऽध्यायः।।२।।

को प्राप्त कर अमर हो गया (अर्थात् आत्मज्ञान द्वारा पूर्णकाम होने के कारण जीवित ही अमरत्व को प्राप्त किया)।।६।।

।।इति द्वितीयाध्यायः प्रथमखण्डः।।

इति श्रीमत्परमहंसपरिव्रजकाचार्ययतीन्द्रकुलतिलककैलासपीठाधीश्वरपरामदर्शमहामण्डलेश्वरस्वामिविद्यानन्दगिरि-विरचिताऐतरेयोपनिषद्द्वितीयाध्यायस्य विद्यानन्दीमिताक्षरा ।।२।।

---

सर्वात्मभावमापन्नः सन्नमुष्मिन्यथोक्तेऽजरेऽमरेऽमृतेऽभये सर्वज्ञेऽपूर्वेऽनपरेऽनन्तरेऽबाह्ये प्रज्ञानामृतैकरसे प्रदीपवन्निर्वाणमत्यगमत्स्वर्गे लोके स्वस्मिन्नात्मनि स्वे स्वरूपेऽमृतः समभवदात्मज्ञानेन पूर्वं समाप्तकामतया जीवन्नेव सर्वान्कामानाप्त्वेत्यर्थः। द्विर्वचनं सफलस्य सोदाहरणस्याऽऽत्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम्।।६।।

इत्यैतरेयोपनिषद्भाष्ये द्वितीयाध्याये प्रथमः खण्डः।।१।।

*इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्कृतावैतरेयोप-निषद्भाष्ये द्वितीयोऽध्यायः।।२।।*

प्रज्ञान उपलब्धयर्थं एतस्य मनो रूपस्य करणस्य वृत्तयो ~~[illegible]~~ :
(1) अध्यवसाय निश्चयः (2) तृष्णा (3) स्त्री संपर्कादि अभिलाषा।

# अथ तृतीयोऽध्यायः।

(आरण्यकक्रमेण: षष्ठोऽध्याय:)

तत्र प्रथम: खण्ड:

**ॐ कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा। येन वा पश्यति येन वा शृणोति येन वा गन्धाना-जिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति।।१।।**

हम जिस आत्मा की उपासना करते हैं, वह आत्मा कौन है? जिससे जीव प्राणी देखता है या जिससे सुनता है, या जिससे गन्धों को सूँघता है, या जिससे शब्द का विश्लेषण करता है, या जिससे स्वादु अस्वादु वस्तु को जानता है (अर्थात् उक्त सभी ज्ञानों के कारण और कर्तारूप दो आत्माओं में से) वह कौन सा आत्मा है।।१।।

---

ब्रह्मविद्यासाधनकृतसर्वात्मभावफलावाप्तिं वामदेवाद्याचार्यपरम्परया श्रुत्या-ऽवद्योत्यमानां ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धामुपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्म जिज्ञासवोऽनित्यात्साध्यसाधनलक्षणात्संसारादाजीवभावाद्व्याविवृत्सवो विचारयन्तो-ऽन्योन्यं पृच्छन्ति कोऽयमात्मेतिकथं यमात्मानमयमात्मेति साक्षाद्वयमुपास्महे,कः स आत्मेति। यं चाऽऽत्मानमयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः समभवत्तमेव वयमप्यु-पास्महे को नु खलु स आत्मेति। एवं जिज्ञासापूर्वमन्योन्यं पृच्छतामतिक्रान्तविशेषविषय-श्रुतिसंस्कारजनिता स्मृतिरजायत। "तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्" (ऐ. आ. २-१-४)। "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत"। एतमेव पुरुषं द्वे ब्रह्मणी इतरेतरप्राति-कूल्येन प्रतिपन्ने इति। ते चास्य पिण्डस्याऽऽत्मभूते। तयोरन्यतर आत्मोपास्यो भवितुमर्हति। योऽत्रोपास्यः कः स आत्मेति विशेषनिर्धारणार्थं पुनरन्योन्यं पप्रच्छु-र्विचारयन्तः।

पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया मतिरभूत्। कथं, द्वे वस्तुनी अस्मिन्पिण्डे उपलभ्येते अनेकभेदभिन्नेन करणेन येनोपलभते यश्चैक उपलभते करणान्तरोपलब्धविषयस्मृतिप्रतिसंधानात्। तत्र न तावद्येनोपलभते स आत्मा भवितु-मर्हति। केन पुनरुपलभते इति। उच्यते। येन वा चक्षुर्भूतेन रूपं पश्यति येन वा शृणोति श्रोत्रभूतेन शब्दं येन वा घ्राणभूतेन गन्धानाजिघ्रति येन वा वाक्करणभूतेन

**यदेतद्धृदयं मनश्चैतत्। संज्ञानमाज्ञानं विज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति।।२।।**

यह जो (प्रजाओं का रेतरूप सारभूत) हृदय है, वही मन भी है, चेतनता, प्रभुता, विज्ञान, प्रज्ञान मेधा, दृष्टि, धृति, मति, मनीषा, रोगादिजनित दुःखरूप जूति, स्मृति, संकल्प, क्रतु, प्राण, काम और मनोनुकूल वस्तुओं के स्पर्शादि कामना ये सभी प्रज्ञान के नाम हैं।।२।।

---

वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च। येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति।।१।।

किं पुनस्तदेवैकमनेकधा भिन्नं करणमिति, उच्यते —

यदुक्तं पुरस्तात् "प्रजानां रेतो हृदयं हृदयस्य रेतो मनः" (ऐ. आ. २-१-३) "मनसा सृष्टा आपश्च वरुणश्च" (ऐ. आ. २-१-७) "हृदयान्मनो मनसश्चन्द्रमाः" तदेवैतद्धृदयं मनश्चैकमेतदनेकधा। 'एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति श्रोत्रभूतेन शृणोति घ्राणभूतेन जिघ्रति वाग्भूतेन वदति जिह्वाभूतेन रसयति स्वेनैव विकल्पनारूपेण मनसा विकल्पयति हृदयरूपेणाध्यवस्यति। तस्मात्सर्वकरणविषयव्यापारकमेकमिदं करणं सर्वोपलब्ध्यर्थमुपलब्धुः। तथा च कौषीतकिनां "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति" (कौ. ३-६) इत्यादि। वाजसनेयके च — "मनसा ह्येव पश्यति मनसा शृणोति" (बृ. १-५-३) "हृदयेन हि रूपाणि जानाति" (बृ. ३-९-२०) इत्यादि। तस्माद्धृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्वं प्रसिद्धम्। तदात्मकश्च प्राणो यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण इति ब्राह्मणम्। करणसंहतिरूपश्च प्राण इत्यवोचाम प्राणसंवादादौ। तस्माद्यत्प्रपदाभ्यां प्रापद्यत ब्रह्मैतदुपलब्धुरुपलब्धिकरणत्वेन गुणभूतत्वान्नैव वस्तु ब्रह्मोपास्यात्माभवितुमर्हति। पारिशेष्याद्यस्योपलब्धुरुपलब्ध्यर्था एतस्य हृदयस्य मनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणाः स उपलब्धोपास्य आत्मा नो भवितुमर्हतीति निश्चयं कृतवन्तः।

तदन्तःकरणोपाधिस्थस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषयविषयास्ता इमा उच्यन्ते —

संसर्ग अनवगाहि यथार्थ ज्ञान जनकम् "अखण्डवाक्यार्थः
आत्मा का परिच्छिन्नत्व मिटेगा, और ब्रह्म का परोक्षत्व मिटेगा। अखण्डवाक्यार्थ फल



प्रज्ञान की व्यापकता

आत्मा

एषब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म।।३।। उपसंहार (1)

यह प्रज्ञानरूप आत्मा ही परात्पर ब्रह्मा है, यही इन्द्र है, यही प्रजापति है, यही अग्न्यादि सारे देव तथा पृथिवी, वायु, आकाश, जल और तेज ये पाँच भूत है, यही क्षुद्र जीवों के सहित उनके बीज एवं अन्य-अन्य अण्डज, जरायुज, स्वेदज, उद्भिज्ज, अश्व, गौ, मनुष्य और हाथी है तथा जो कुछ भी यह जंगम आकाशगामी पक्षी और वृक्षादिरूप स्थावर वर्ग है वह सब प्रज्ञानेत्र और निरुपाधिक प्रज्ञान में ही स्थित है, लोक प्रज्ञानेत्र वाला है, प्रज्ञान ही उसका विलयस्थान है। अतः प्रज्ञान ही ब्रह्म है।।३।।

---

संज्ञानं संज्ञप्तिश्चेतनभावः आज्ञानमाज्ञप्तिरीश्वरभावः। विज्ञानं कलादिपरिज्ञानम्। प्रज्ञानं प्रज्ञप्तिः प्रज्ञता। मेधा ग्रन्थधारणसामर्थ्यम्। दृष्टिरिन्द्रियद्वारा सर्वविषयोपलब्धिः। धृतिर्धारणमवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति। धृत्या शरीरमुद्वहन्तीति हि वदन्ति। मतिर्मननम्। मनीषा तत्र स्वातन्त्र्यम्। जूतिश्चेतसो रुजादिदुःखित्वभावः। स्मृतिः स्मरणम्। संकल्पः शुक्लकृष्णादिभावेन संकल्पनं रूपादीनाम्। क्रतुरध्यवसायः। असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः। कामोऽसंनिहितविषयाकाङ्क्षा तृष्णा। वशः स्त्रीव्यतिकराद्यभिलाषः। इत्येवमाद्या अन्तःकरणवृत्तयः प्रज्ञप्तिमात्रस्योपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि भवन्ति संज्ञानादीनि। चित्त का रोगादि

सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति, न स्वतः साक्षात्। तथा चोक्तं प्राणन्नेव प्राणो नाम भवतीत्यादि।।२।।

स एष प्रज्ञानरूप आत्मा ब्रह्मापरं सर्वशरीरस्थः प्राणः प्रज्ञात्माऽन्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्यप्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा। एष एवेन्द्रो गुणा-

फल ४

स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मि- न्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्सम- भवत्।।४।।

इति पञ्चमः खण्डः।।५।।

इत्यैतरेये द्वितीयारण्यके षष्ठोऽध्यायः।।६।।

वह वामदेव इस चेतनात्मस्वरूप से ही इस लोक से उत्क्रमण कर इन्द्रियातीत ब्रह्मात्मरूप स्वर्ग लोक में सम्पूर्ण कामनाओं को प्राप्त कर अमर हो गया।।४।।

।।इति तृतीयोऽध्यायः।।

इति श्रीमत्परमहंसपरिव्रजकाचार्ययतीन्द्रकुलतिलककैलासपीठाधीश्वरपरामदर्शमहामण्डलेश्वरस्वामिविद्यानन्दगिरि- विरचिताऐतरेयोपनिषद्तृतीयाध्यायस्य विद्यानन्दीमिताक्षरा।।३।।

।।इत्यैतरेयोपनिषत्समाप्ता।।

---

द्देवराजो वा। एष प्रज्ञापतिर्यः प्रथमजः शरीरी। यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः। स प्रजापतिरेष एव। येऽप्येतेऽग्न्यादयः सर्वे देवा एष एव। इमानि च सर्वशरीरोपादानभूतानि पञ्च पृथिव्यादीनि महाभूतान्यन्नान्नादलक्षणान्येतानि। किंचेमानि च क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मिश्राणि। इवशब्दोऽनर्थकः।

सर्पादीनि बीजानि कारणानीतराणि चेतराणि च द्वैराश्येन निर्दिश्यमानानि। कानि तानि उच्यन्ते। अण्डजानि पक्ष्यादीनि। जारुजानि जरायुजानि मनुष्यादीनि। स्वेदजानि यूकादीनि। उद्भिज्जानि च वृक्षादीनि। अश्वा गावः पुरुषा हस्तिनोऽन्यच्च यत्किंचेदं प्राणिजातम्। किं तत्। जङ्गमं यच्चलति पद्भ्यां गच्छति। यच्च पतत्रि। आकाशेन पतनशीलम्। यच्च स्थावरमचलं सर्वं तदशेषतः प्रज्ञानेत्रं प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव नीयतेऽनेनेति नेत्रं प्रज्ञैव नेत्रं यस्य तदिदं प्रज्ञानेत्रम्। प्रज्ञाने ब्रह्मण्युत्पत्ति- स्थितिलयकालेषु प्रतिष्ठितं प्रज्ञानाश्रयमित्यर्थः। प्रज्ञानेत्रो लोकः पूर्ववत्। प्रज्ञाचक्षुर्वा सर्व एव लोकः। प्रज्ञा प्रतिष्ठा सर्वस्य जगतः। तस्मात्प्रज्ञानं ब्रह्म।

तदेतत्प्रत्यस्तमितसर्वोपाधिविशेषं सन्निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेतिनेतीतिसर्वविशेषापोहसंवेद्यं सर्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसंबन्धेन सर्वज्ञमीश्वरसंज्ञं भवति। सर्वसाधारणाव्याकृतजगद्बीजप्रवर्तकं नियन्तृत्वादन्तर्यामिसंज्ञं भवति। तदेव व्याकृतजगद्बीजभूतबुद्ध्यात्माभिमानलक्षणं हिरण्यगर्भसंज्ञं भवति। तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिमद्विराट्प्रजापतिसंज्ञं भवति। तदुद्भूताग्न्याद्युपाधिद्देवता- दिसंज्ञं भवति। तथा विशेषशरीरोपाधिष्वपि। ब्रह्मादिस्तम्बपर्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मणः। तदेव चैकं सर्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा। "एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम्" (मनु. १२-१२३) इत्याद्या स्मृतिः।।३।।

स वामदेवोऽन्यो वैवं यथोक्तं ब्रह्म वेद प्रज्ञेनाऽऽत्मना येनैव प्रज्ञेनाऽऽत्मना पूर्वे

## शान्तिपाठः

हरिः ॐ। वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम्।ॐ। शान्तिः शान्तिः शान्तिः। इति षष्ठः खण्डः।।६।।
इत्यैतरेये द्वितीयारण्यके सप्तमोऽध्यायः।।७।।

---

विद्वांसोऽमृता अभूवंस्तथाऽयमपि विद्वानेतेनैव प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्येत्यादि व्याख्यातम्। अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदित्योम्।।४।।

इत्यैतरेयोपनिषद्भाष्ये तृतीयोऽध्यायः ।।३।।
इत्यैतरेये द्वितीयारण्यकभाष्ये षष्ठोऽध्यायः।।६।।

*इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्य-श्रीशंकरभगवतः कृतौ बह्वृचब्राह्मणोपनिषद्भाष्यं समाप्तम्।*

✦ द्वितीयमाह्निकम् ✦

ॐ उदितः शुक्रियं दधे। तमहमात्मनि दधे। अनु मामैत्विन्द्रियम्। मयि श्रीर्मयि यशः। सर्वः सप्राणः सबलः। उत्तिष्ठाम्यनु मा श्रीः। उत्तिष्ठत्वनु माऽऽयन्तु देवताः। अदब्धं चक्षुरिषितं मनः। सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः। तच्चक्षुर्देवहितं शुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्। त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः। ॐ शान्तिः शान्तिः शान्तिः।

इति ऋक्शाखीयायामैतरेयोपनिषदि द्वितीयारण्यकान्तर्गतमात्मष्टकं द्वितीयारण्यकं च समाप्तम्।। ॐ तत्सत्।।

श्री कैलासपीठाधीश्वर अनन्त श्री विभूषित श्रीमत्परमहंसपरिव्राजकाचार्य परमादर्श महामण्डलेश्वर

# श्रीस्वामी विद्यानन्द गिरि जी महाराज

एवं श्री कैलास आश्रम के पूर्वाचार्यों की अनुपम कृतियाँ।

## कैलासविद्याप्रकाशन ग्रंथमाला

| | | |
|---|---|---|
| १. | ईशावास्योपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्योपेता) क्राउन साइज ८ पेजी पृष्ठ ६८ ... | ३०.०० |
| २. | ईशावास्य प्रवचनसुधा, डिमाई साइज पृष्ठ ३२० ... | ५०.०० |
| ३. | ईशावास्य प्रवचनसुधा (आंग्ल अनुवाद) डिमाई १६ पेजी सजिल्द ... | २००.०० |
| ४. | केनोपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्ययुता) क्राउन साइज पृष्ठ १३८ ISBN 81-900625-7-3 ... | ५०.०० |
| ५. | कठोपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्योपेता) क्राउन साइज पृष्ठ १४० ... | ५०.०० |
| ६. | प्रश्नोपनिषद् (सटिप्पणटीकाद्वयसमलंकृत शाङ्करभाष्योपेता) क्राउन साइज पृष्ठ १२० ... | ४०.०० |
| ७. | मुण्डकोपनिषद् (सटिप्पणटीकाद्वयसमलंकृत शाङ्करभाष्योपेता) क्राउन साइज ८ पेजी पृष्ठ ९० ... | ४०.०० |
| ८. | माण्डूक्य कारिका (सटिप्पण, हिन्दी, संस्कृत टीका सहित शाङ्करभाष्य) क्राउन साइज ८ पेजी पृष्ठ ३२० ISBN 81-900625-8-1 ... | २५०.०० |
| ९. | माण्डूक्य कारिका (सानुवाद शाङ्करभाष्ययुता) ... | ५०.०० |
| १०. | तैत्तिरीयोपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्ययुता) क्राउन साइज पृष्ठ १७८ ISBN81-900625-9-X ... | ७५.०० |
| ११. | एतरेयोपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्युयता) क्राउन साइज पृष्ठ ११२ ... | ५०.०० |
| १२. | छान्दोग्योपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्ययुता) क्राउन साइज पृष्ठ ७३४ ... | २००.०० |
| १३. | बृहदारण्यकोपनिषद् (सटिप्पणटीकाद्वय समलङ्कृत शाङ्करभाष्ययुता) सजिल्द क्राउन ८ पेजी २ खण्ड, पृष्ठ १६६२ ... | ५००.०० |
| १४. | ईशादि सप्तोपनिषद् (सटिप्पणटीकाद्वय शाङ्करभाष्योपेता) क्राउन साइज ... | २००.०० |
| १५. | ईशादि द्वादशोपनिषद् (विद्यानन्दी मिताक्षरा हिन्दी व्याख्या) सजिल्द डबल डिमाई १६ पेजी पृष्ठ ५३२ (ओडियो-विडियो कैसेट उपलब्ध है) ... | २००.०० |
| १६. | ईशादिपञ्चोपनिषदः (मिताक्षरा हिन्दी व्याख्या शाङ्करभाष्ययुताः) पारायण संस्करण) ... | २००.०० |
| १७. | माण्डूक्यादित्रयोपनिषदः (मिताक्षरा हिन्दी व्याख्या शाङ्करभाष्युताः) (पारायण संस्करण) ... | २००.०० |
| १८. | छान्दोग्योपनिषद् (मिताक्षरा हिन्दी व्याख्या शाङ्करभाष्ययुता) (पारायण संस्करण) ... | यन्त्रस्थ |
| १९. | बृहदारण्यकोपनिषद् (मिताक्षरा हिन्दी व्याख्या शाङ्करभाष्युयता) (पारायण संस्करण) ... | यन्त्रस्थ |
| २०. | ब्रह्मसूत्र (सानुवाद-विद्यानन्दवृत्ति) सजिल्द डबल डिमाई १६ पृष्ठ ५२० (ओडियो-विडियो कैसेट उपलब्ध है) ... | २००.०० |
| २१. | ब्रह्मसूत्र (संस्कृत विद्यानन्दवृत्तिपरीक्षोपयोगी) डबल डिमाई साइज १६ पेजी पृष्ठ २४७ ... | २५.०० |

२२. ब्रह्मसूत्र (शाङ्करभाष्य सटिप्पणरत्नप्रभा ललिता व्याख्यायुतम्) (भाग-१) ... ३००.००
ISBN 81-900625-3-0 (भाग-२) ... ५००.००
२३. ब्रह्मसूत्र (चतुःसूत्री, शाङ्करभाष्य सटिप्पण ललिता व्याख्यायुतम्) ISBN 81-900625-0-6 ... १००.००
२४. ब्रह्मसूत्र मूलपाठ ... १०.००
२५. वैयासिक न्यायमाला (संस्कृत, हिन्दी, टीकाद्वय सम्वलिता व्याख्यायुता)
ISBN 81-900625-4-9 ... १५०.००
२६. वैयासिक न्यायमाला (सानुवाद ललिता व्याख्यायुता) ISBN 81-900625-4-7 ... १००.००
२७. श्रीमद्भगवद्गीता (शाङ्करभाष्य सटिप्पण आनन्दगिरि टीका ललिता व्याख्यायुतम्)
ISBN 81-900625-1-4 ... ४००.००
२८. श्रीमद्भगवद्गीता (शाङ्करभाष्य ललिता व्याख्यायुतम्) ISBN 81-900625-2-2 ... २५०.००
२९. श्रीमद्भगवद्गीता (अष्टादशाह प्रवचन) (ओडियो-विडियो कैसेट उपलब्ध है) ... २५०.००
३०. वेदान्त परिभाषा (अर्थदीपिका एवं सानुवाद सुबोधिनी व्याख्या) सजिल्द क्राउन
साइज 8 पेजी ... ८०.००
३१. वेदान्त परिभाषा (परीक्षाब्धिसंतरणी) ... २०.००
३२. प्रत्यक्तत्त्वप्रदीपिका (चित्सुखी छात्रतोषिणी टीका परीक्षाब्धि संतरणी
अष्टोत्तरशतन्यायमालायुता) ... १२०.००
३३. प्रत्यक्तत्त्वप्रदीपिका (चित्सुखी सटिप्पणटीकाद्वय संवलिता भाग १-२) ... १८०.००
३४. प्रत्यक्तत्त्वप्रदीपिका (चित्सुखी परीक्षाब्धि संतरणी) ... ४०.००
३५. चतुःसूत्री (भामती परीक्षाब्धि संतरणी) ... २०.००
३६. व्यासिपञ्चकम् (सानुवाद माथुरी छात्रतोषिणी संवलितम्) ... ४०.००
३७. सिद्धान्तलक्षणम् (जागदीशी छात्रतोषिणी हिन्दी व्याख्यात्रय संवलितम। ... यन्त्रस्थ
३८. संक्षेप शारीरकं (सानुवाद-मधुसूदनी सटिप्पणं हिन्दीव्याख्या संवलितं [भाग-१-२] ... ५००.००
३९. संक्षेप शारीरकं (सानुवाद ललिता व्याख्यायुता) ... २००.००
४०. सागरसेतु सजिल्द क्राउन साइज पृष्ट ३२० ... ५०.००
४१. कैलास आश्रम शताब्दी स्मारिका सजिल्द क्राउन साइज पृष्ठ ४३४ ... ५०.००
४२. यतीन्द्रतिलक सजिल्द क्राउन साइज पृष्ठ ३२४ ... ५०.००
४३. दिवयस्मृति पृष्ठ ३८८ ... २०.००
४४. आचार संहिता ISBN 81-900625-6-5 ... ५०.००
४५. व्यासपूजापद्धति (शङ्खकलशप्रधानवेदीमण्डलैःसमलङ्कृता) ... २०.००
४६. चित्राञ्जलिः ... १२५.००
४७. श्रद्धासुमनाञ्जलिः ... १५०.००
४८. अमृताञ्जलिः ... ५०.००
४९. श्रुतिसारसमुद्धरणम् (हिन्दीटीकायुतम्) क्राउन १६ पेजी पृष्ठ १५२ ... २०.००

५०. तत्वबोध, आत्मबोध सानुवाद पृष्ठ १०० ... २०.००
५१. वेदान्त रत्नाकर क्राउन १६ पेजी पृष्ठ ११६ ... २०.००
५२. वेदान्त डिण्डिम घोष (सानुवाद) पृष्ठ ५८ ... २०.००
५३. वैराग्यपञ्चक (कुञ्जिकाव्याख्या) ... यन्त्रस्थ
५४. अद्वैतमुक्तावली (मूल पञ्जाबी का संस्कृत श्लोकों एवं हिन्दी में अनुवाद) ... २०.००
५५. अमर संस्मरण (श्री अमरनाथ यात्रा विवरण) ... २०.००
५६. नित्यस्वर्णपुष्पोपहार ... १२५.००
५७. चैतन्य वचनामृतं ... ५०.००
५८. सानुवादगङ्गालहरी ... १०.००
५९. हरिहरतारतम्यस्तोत्र सानुवाद ... ५.००
६०. जीवन्मुक्तशिवाराधन ... १०.००
६१. मुक्ति सोपान ... ५०.००
६२. मानस सूक्ति सुधा ... १०.००
६३. शिवमहिम्न: स्तोत्र सान्वय व्याख्या सहित ... १०.००
६४. वैदिक दशशान्तिमन्त्र सानुवाद ... ५.००
६५. संक्षेप शारीरक परीक्षाब्धि संतरणी ... ४०.००
६६. संक्षेप शारीरक मूलपाठ: (अन्वयाङ्क संस्करणे) ... १००.००
६७. अष्टोत्तरशतन्यायमाला ... २०.००
६८. पाणिनीयाष्टाध्यायी ललिता टीका ... यन्त्रस्थ
६९. शङ्कर वचनामृतम् सानुवाद ... ५.००
७०. भगवती महिषासुर-मर्दिनी-प्रियतमम् ... ५०.००
७१. श्रीरामाश्रमोद्भव-विकास ... यन्त्रस्थ



**विशेष सूचना** — पुस्तक मँगाने वाले सज्जन अग्रिम राशि निम्नांकित कार्यालय में भेजकर मँगावें। पुस्तक के मूल्यातिरिक्त डाक, रेलवे तथा पोस्टेज व्यय भी लगेगा, वी. पी. द्वारा पुस्तक भेजने का क्रम नहीं है। ओडियो वीडियो कैसटों के लिए प्रधान कार्यालय में सम्पर्क करें।


मुख्य कार्यालय

**श्री कैलास आश्रम ऋषिकेश (उ० प्र०)**

पिन - २४९२०१, दूरभाष: (३१३५) ४३०५९८

प्रकाशक

**कैलासविद्या प्रकाशन श्री कैलास आश्रम, ऋषिकेश (उ० प्र०)**

# जगद्गुरु आदिशङ्कराचार्य



सृष्टि के आरम्भ से भारतवर्ष में अवतारों की एक बहुत बड़ी शृंखला रही है। निर्गुण निराकार परमात्मा सन्तों के परित्राण, दुष्टों के उद्धार तथा धर्म संस्थापना के लिए समय-समय पर इस धरा पर अवतरित होते रहते हैं। भगवान् विष्णु के दशावतार तथा चौबीस अवतार इसी क्रम में आते हैं। इन अवतार क्रमों में जगद्गुरु आदि श्री शंकराचार्य भगवान् सदाशिव के अवतार माने जाते हैं।

जगद्गुरु आद्य श्री शंकराचार्य का प्रादुर्भाव वैशाख शु. ५ वि.सं. ८४५ (सन् ७८८ ई.) में केरल प्रदेश (दक्षिण भारत) के कालड़ी ग्राम में पिता श्री शिवगुरु एवं माता श्री आर्याम्बा के यहाँ हुआ। बाल्यकाल से ही आपकी अलौकिक प्रतिभा का परिचय सब लोगों को होने लगा। पाँचवें वर्ष में विधिवत् उपनयन संस्कार के अनन्तर आप गुरु के पास अध्ययन करने गये। आठ वर्ष की स्वल्पायु में आपने संन्यास ग्रहण हेतु गृह त्याग किया, जो विश्व के इतिहास में एक अलौकिक घटना है। योगदर्शन के रचयिता पतंजलि महर्षि के अवतार श्री गोविन्दाचार्य भगवत्पाद को गुरु वरण कर उनको खोजते हुए नर्मदा तीर स्थित एक गुफा में श्री शंकराचार्य ने उनके दर्शन प्राप्त किए और कुछ वर्षों तक उनकी सेवा में रहकर साधना एवं स्वाध्याय सम्पन्न किया। आचार्य शंकर की काशी यात्रा में भगवान् शंकर ने चाण्डाल रूप धारण कर आप की परीक्षा ली और सब प्रकार से योग्य सिद्धकर विश्वनाथ रूप में आपको दर्शन दिये।

उत्तरभारत में श्री बद्रीनाथ स्थित व्यासगुफा में आचार्य शंकर ने चार वर्ष तक निवास किया और उपनिषद्, गीता, ब्रह्मसूत्रादि ग्रन्थों पर अपना प्रामाणिक भाष्य लिखा। उस समय आपकी आयु सोलह वर्ष हो चुकी थी जो विधाता एवं महर्षि अगस्त्यादि प्रदत्त आयु की सीमी थी। किन्तु महर्षि वेदव्यास जी के उत्तरकाशी में दर्शन आप को हुए और आपके द्वारा लिखे भाष्यों से प्रसन्न होकर १६ वर्ष और आयु का आशीर्वाद भगवान् वेदव्यास जी ने आपको दिया।

आचार्य शंकर ने अद्वैत मत के प्रचार हेतु अपनी दिग्विजयी भारत यात्रा की। धर्म प्रचार के उद्देश्य से एवं भारत की अखण्डता बनाये रखने हेतु चार दिशाओं में चार मठों की आपने स्थापना की। केदारनाथ की अपनी अन्तिम यात्रा में वहीं अन्तर्धान हो गए। अत: केवल ३२ वर्ष की आयु में ही आचार्य शंकर ने वैदिक सनातन धर्म की परम्पराओं में अनेक क्रांतिकारी कदम उठाकर भारत भूमि में धर्म की पताका को पुन: ऊँचा किया। आप द्वारा रचे दो सौ से भी अधिक ग्रन्थों की देन से मानवमात्र आदि शंकराचार्य जी के ऋणी हैं।

देवानुग्रह त्रिदशक महोत्सव वि. सं. २०५५-५६ में श्रीदशमकैलासपीठाधीश्वर जी महाराज ने प्रतिदिन एक घण्टा शांकर साहित्य पारायण का जो नियम लिया है, यह आचार्य शंकर के प्रति निष्ठा का अनुकरणीय आदर्श है। हम सब भी इसका अनुसरण कर आचार्य शंकर द्वारा रचे ग्रन्थों का पारायण कर अपने जीवन को कृतकृत्य बनायें। यही आचार्य शंकर के प्रति सच्ची श्रद्धांजलि होगी।

# देवानुग्रहत्रिदशकमहोत्सवप्रसङ्गे प्रकाशितम्



### श्रीकैलासपीठाधीश्वर परमादर्श आ. म. मं.

## श्रीमत्स्वामी विद्यानन्द गिरि जी महाराज

आप का जन्म २९ नवम्बर, सन् १९२१ को जिला पटना (बिहार) के गाजी पुर ग्राम में हुआ। आपके पिता श्रीमान् जवाहर शर्मा जी और माता श्रीमती ललिता देवी थीं। आप बाल्यकाल से ही भगवान् की उपासना में रुचि रखते थे। २० वर्ष की आयु में आपने घर गृहस्थी को त्याग कर साधु जीवन अपनाया। आपके गुरुदेव परमहंस स्वामी विज्ञानानन्द गिरि जी महाराज एवं परमगुरुदेव योगीराज स्वामी नित्यानन्द गिरि जी महाराज से आपने परमार्थ पथ की दीक्षा ली। अपनी सारस्वत साधना में आपने काशी में वेदान्त-सर्वदर्शनाचार्य तक अध्ययन कर परीक्षा पास की। तत्पश्चात् आप अध्यापन कार्य में संलग्न हुए। दस वर्षों तक दिल्लीस्थ विश्वनाथ संस्कृत महाविद्यालय के प्रधानाचार्य रहे। वहीं पर निरंजनपीठाधीश्वर आचार्य म.मं. स्वामी नृसिंह गिरि जी महाराज एवं निरंजनपीठाधीश्वर आचार्य म.मं. स्वामी महेशानन्द गिरि जी महाराज की छत्रछाया में संन्यास दीक्षा ली।

२१ जुलाई सन् १९६९ को आप कैलास ब्रह्मविद्यापीठ ऋषिकेश के महामण्डलेश्वर पद पर आसीन हुये। आपके कार्यकलापों से तब विद्यमान् कैलास आश्रम के दो पूर्वाचार्य म.मं. स्वामी विष्णुदेवानन्द गिरि जी महाराज एवं म.मं. स्वामी चैतन्य गिरि जी महाराज अत्यन्त संतुष्ट हुये। आपने ग्रन्थ रचना एवं प्रकाशन में विशेष रुचि ली और अनेकों ग्रन्थों का लोककल्याणार्थ प्रकाशन बड़े धैर्यपूर्वक करवाया। आप भारत के आध्यात्मिक एवं धार्मिक क्षेत्र के आचार्यों में अग्रगण्य हैं। साधु समाज की दृष्टि में आप की क्षमता, शक्ति, लगन, तत्परता, विद्वत्ता तपश्चर्या सहिष्णुता एवं उदारता सभी गगन-चुम्बी और अलौकिक हैं, आध्यात्मिक संस्कृति के सर्वाङीन विकास और जन जीवन को दिव्यालोक प्रदान करने में आपने युगपुरुष की भूमिका निभाई है।

१० दिसम्बर १९९६ को आपके पावन जीवन के ७५ वर्ष पूर्ण होने पर आपका अमृत महोत्सव सन्तों एवं भक्तों ने बड़ी धूमधाम से मनाया और आपके सुदीर्घ स्वस्थ जीवन की आशुतोष भगवान् शंकर से प्रार्थना की। आषाढ़ शु. ७ वि. सं. २०५५ से सवा वर्ष पर्यन्त कैलासाश्रम में आपके पीठासीन हुए तीस वर्ष होने के उपलक्ष्य में "देवानुग्रह त्रिदशक" महोत्सव मनाया जा रहा है।